# भारतीयदेशभक्तचरितम्
## ( प्रथमो भागः )
# Bharatiya Desabhakta Charitam
## ( PART I )

*With a foreword*

BY

**PROF. U. VENKATAKRISHNA RAO, M. A.**
*Professor of Sanskrit, Madras Christian College*
*&*
*Member, Academic Council, Madras University*

BY

*Sahityalankara, Kavibhushana*
**Sri K. S. NAGARAJAN** B·SC·
( *Supt. A.G.'s Office, Bangalore.* )
Author of Stotramuktaphalam, Sri Sitaswayamvaram,
Sri Sabarivilasam, Unmattakichakam, etc.

SRI RAMA PRESS
RANGA RAO ROAD, SHANKARAPURAM,
BANGALORE 4·
1952

*Price: Rs. 1-8-0* ] [ मूल्यम्: १-८-०

# विषयानुक्रमः



## BIBLIOGRAPHY


1 Religion in Transition —
*Edited by Virgilius Ferm*

(i) My Search for Truth
*by Dr. Sri S. Radhakrishnan*

(ii) A Pilgrim's Progress *by C. F. Andrews*

2. The Indian Nation Builders Part II —
*Published by Ganesh & Co., Publishers*

3. Deepamala in Kannada (ದೀಪಮಾಲಾ) —
*by Sri Siddavanahalli Krishna Sharma*

4. Deenbandhu — (a brief biographical sketch of C. F. Andrews) — *Published by the Tagore. Memorial Publications, Lahrre.*

5. Current Papers, Magazines and Periodicals

# स्वस्तिवाचनम्

---

महान्तमानन्दमावहति मम मित्रवर्यस्य साहित्यालङ्कारबिरुदाङ्कितस्य नागराजशर्मणः गद्यकाव्यस्य विद्वद्गोष्ठ्यवतारणावसरे प्रशस्तिप्रदानानिबन्धणमिदम् । अत्र तु मम संशयः विद्वद्गोष्ठ्यामवतारणस्यावश्यकता सीतास्वयंवरादिमहाकाव्यानां रचयितुः अथवास्यैव जनस्येति । यथाकथमपि भवतु । ममैवायं विद्वद्गोष्ठीषु विहर्तुमवसर इति कृत्वा यत्किञ्चित् यथामति विलिख्यते ।

गैर्वाणी वाणी दास्यमनुभवद्राजकलत्रमिव दुर्दैववशाद् अधुना नीरसा जाता इत्यत्र वाण्युपासका वयमेव निन्दायाः भवामो भाजनंन हि स्थाणोरपराधः यदेनमन्धो न पश्यतीत्यभियुक्तोक्तरीत्या । अस्या एव वाण्याः सर्वाङ्गीणेन विकासेन परिपोषेण वा वयं नैजं गतवैभवं पुनरपि सम्पादयितुं प्रभवेम ।

सुरभारत्या यथा हर्षवर्धनभोजदेवादिमहाराजकाले गौरवमासीत् तथैव स्वतंत्रे भारते पुनरपि राजसम्माननं संपद्येत इति दृढं विश्वसिमः । अत्र चेदं प्रथमतयावधार्यं यद् अस्मादृशैर्भाषोपासकैः प्राचीनं ज्ञानं नवीनं विज्ञानं च सम्यक् तुलनापुरस्सरं परिशील्य प्राचीनज्ञानस्य उत्कर्षः सविशदं विद्यार्थिनां पुरतः प्रदर्शनीय इति । अद्यत्वे विद्यार्थिनः सर्वे नवीनं विज्ञानमेव प्रशंसन्तः प्राचीनमौपनिषदं ज्ञानं गर्हयन्ति

खलु । परमार्थतः यदि विचारः प्रवर्त्यते तर्हि उभयोरपि यथायोग्यं संकलनमेव श्रेयस्करमिति वयं निश्चप्रचं वक्तुं प्रभवामः । ईदृशे च औपनिषदविद्यासंदेशप्रसारे बद्धादरा नागराजार्याः सर्वथाभिनन्दनीयाः ।

साहित्यवृक्षस्य सर्वतोमुखाभिवृद्धौ बद्धदीक्षाः न केवलं महाकाव्यनाटकादीनि रचयित्वा विरमन्ति, परन्तु अधुना गद्यकाव्यनिर्माणेऽपि अन्यादृशं नैपुण्यं प्रदर्शयन्तीत्ययमपि हेम्नः परमामोदः । 'गद्यं कवीनां निकषं वदन्ति' इति सहृदयसिद्धान्तं मनसि निधाय, पश्चषा एव गद्यकवयो गैर्वाणवाण्यामिति दूयमानहृदया इव अस्मिन् गद्यमये प्रबन्धविन्यासे बद्धादरा अभवन् इति मन्ये । अत्रापि आधुनिकविद्यार्थिनां मनः अयस्कान्तेन लोहवत् आकष्टुं एते सुप्रसिद्धदेशभक्तानां चरितमत्र सरलया वाण्या मनोरञ्जिकया द्राक्षापाकभूयिष्ठया शैल्या लिखन्तीति महानयं प्रमोदावसरः ।

अयं गद्यविन्यासः विश्वजनादरणीयो भूत्वा विश्वविद्यालयाधिकारिभिरादृतः परीक्षार्थं यदि पठ्यत्वेन प्रकल्प्येत तर्हि ग्रन्थकर्तुः क्लेशः नवतां विदध्याद् इति सर्वात्मनाशास्यते ।

सरस्वती श्रुतिमहती महीयताम् ।

इति विद्वज्जनवशंवदः

**उडुपि वेंकटकृष्णरायः**

*Professor of Sanskrit and Member*
*Academic Council,*
*Madras University.*

CAMP:
*Bangalore*
*19-5-1952*

# प्रस्तावना

---

श्रीसीतास्वयंवर श्रीशवरीविलासाख्यपद्यकाव्यद्वयरचनानन्तरं गद्यकाव्यरचने कश्चित्प्रयत्नः क्रियते यथाशक्ति। तत्प्रयत्नस्य फलमेवेदं गद्यकाव्यं भारतीयदेशभक्तचरितं नाम सुलभरीत्या विलिखितम्। गैर्वाणीवाण्यां नूतनकाव्यसृष्टिरेवास्य प्रयत्नस्य प्रधानोद्देशः। अमरवाण्यां सन्ति पद्यकाव्यानि संख्याविहीनानि; पद्यकाव्यरचना सर्वत्र विना श्रमेण क्रियते। अत एव गद्यकाव्यविरलता भाषायामस्यां दृश्यते। तामीषदुन्मूल्य संस्कृतं जनप्रियं कर्तुं तीव्राभिलाष एव द्वितीयोद्देशः। अल्यपरोऽप्युद्देशः। महापुरुषाणां चरितानि जनानां जीवितमध्ये दुःखमये मार्गदर्शकानीव भवन्ति। ईदृशं मनोहरं साहित्यं सर्वासु भाषासु वर्तते। संस्कृतसाहित्येऽपि महाकविबाणविरचितं हर्षचरितं दण्डिनो दशकुमारचरितमित्यादीनि प्रख्यातानि। ये ये महानुभावा लोकेऽस्मिन् जन्म धृत्वा देशोद्धारक्रियाबद्धकङ्कणा तेषामुदारचरितानि संक्षेपेण संगृहीतानि। अद्य प्रथमो भागः लिखितः। क्रमेण चेतरे भागा अपि प्रकटीक्रियन्ते। अत्र प्रथमे भागे पञ्चमहापुरुषाणां चरितानि लिखितानि। सर्वे संस्कृतभाषाप्रेमभरिता जनाः सज्जनाश्च काव्यमिदं प्रपठ्य परमानन्दं बिन्दन्त इत्यस्माकं दृढो विश्वासः। यद्येवमुद्देशत्रयमप्यचिरेणैव सिध्यतीति संशयलेशोऽपि नास्ति।

## कविवन्दनम्

बाणं कविं गद्यपितामहं तं कादम्बरीचारुकथानिदानम् ।
धन्यानिहान्यानपि सूरिवर्यान् प्रणम्य हृद्यं रचयामि गद्यम् ॥

## काव्यप्रशंसा

दास्यबन्धजनितं बहुदुःखं मातुरेव सततं परिहर्तुम् ।
जीवितानि मुमुचुर्महनीया ये वदामि चरितानि च तेषाम् ॥
पावनानि चरितानि पठित्वा मोदमेतु परमं सुजनालिः ।
पावनी जगति संस्कृतवाणी वृद्धिमेतु सततं च नवीनाम् ॥

## गुरुवन्दनम्

यस्याङ्घ्रियुग्मे पठिता समस्ता गीर्वाणविद्या रमणीयरीत्या ।
विद्यागुरुं तं विनयेन भक्त्या शेषाभिधानं पितरं नमामि ॥
विद्यावती प्रेमसुधामयी मे मातार्चिता या सकलक्रियासु ।
तामद्य भक्त्या प्रणमामि मूर्ध्ना नागाम्बिकां नूतनगद्यकाव्ये ॥

## राजाशीः

महिषपुरवरश्रीहेतुरुद्दण्डकीर्तिर्जयतु बुधजनानामाश्रयो धर्मनिष्ठः ।
गुणगणपरिपूर्णः पूर्णकामो महीशस्स जयतु जयपूर्वश्चामराजेन्द्रभूपः ॥

---

॥ श्रीः ॥

# भारतीयदेशभक्तचरितम्

(प्रथमो भागः)

---

## १. श्रीकृष्णराजेन्द्रचरितम्

---

नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः ।
नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ॥

'सुभाषितम्'

अस्ति नवीनभारतवर्षे महिशूरसंस्थानमिति विख्यातो रमणीयो देशः । नवसंविभागसंयुक्तश्चातीव विस्तृतो राजकीयरङ्गे प्रधानपात्रमेवावाप्याचरति । परंतु प्राचीनकालादारभ्यायं राज्यशासनचतुरैर्महामेधाविभिर्महीपतिभिस्सम्यक् प्रशासितोऽस्ति । पुरातनेतिहासप्रसिद्धोऽपि आधुनिककालानुरूपं संप्राप्तपरिवर्तनस्सर्वजनचित्ताकर्षणनिरतश्च विराजते । सर्वे जनास्समग्रभारतदेशादत्रागत्य नयनानन्दकराणि दृश्यानि प्रसमीक्ष्य मनश्शान्तिमपि लभन्ते । राज्यभारक्रमाध्ययनानि कर्तुं विविधसंस्थानेभ्यो राजकुमाराश्चात्रैव समागच्छन्ति । असाधारणवैभवोपेतः प्रजारञ्जनक्रियाकलाप-

चतुर्भिर्नृपेन्द्रैरनुशासितो विशेषकीर्तिलतापरिवेष्टितोऽसौ प्रभूतमानन्द किरणानेव संकिरति दिक्षु विदिक्षु च ।

श्रूयते च यदस्य देशस्य प्राचीनकालादारभ्य शासितारो यदुवंशीया इति प्रख्याताः । यदुवंशस्य खलु निखिलजगन्नियामको भगवान् श्रीकृष्ण एव मूलपुरुषः । एकदा क्रिस्ताब्दीयचतुर्दशशतमाने देशे गूर्जराख्ये वंशाम्बुधावस्मिन् यदुराजो नाम नृपचंन्द्रमास्संजातः । स प्रकृत्या क्षात्रगुणोपेतस्साहसक्रियान्वेषणतत्परश्च तं देशं विसृज्य दक्षिणाशां प्रति परमोत्साहभारितो निश्चक्राम । सर्वदा स श्रीमान् भाग्यलक्ष्मीमन्दहासामृतधाराभिषिक्तो जयलक्ष्मीगाढालिङ्गनलब्धरोमाञ्चः, गच्छता कालेन महिशूरदेशमभिप्रपेदे । तत्र महिशूरपुराधिदेवतायाः श्रीचामुण्डेश्वर्या वरप्रसादेन संप्राप्तभाग्योदयो राजकुमारीमुपयेमे । तदनु स यदुराजश्चास्मिन्नेव देशे लब्धप्रतिष्ठो यशोधवलिता दश दिशः कुर्वन् धर्मेण सत्येन च प्रजाश्च परिपालयन् महान्तं कालमनैषीत् सुखसिन्धुनिमग्नः ।

तस्य कुलोत्पन्ना महीपतयोऽपि स्वविक्रमैर्देशं विस्तारयामासुः क्रमेण समारब्धजैत्रयात्राभिः । महम्मदीयाधीनेऽपि भरतवर्षे, दुःखवातूलनिर्धूते प्रजासमूहे, स्वराज्याभिरक्षणतत्परा अमी नरपतयश्चातन्द्रिता बभूवुः । बिजापुराधिपतयो महम्मदीया यदा महिशूरपुरं विजेतुमयतन्त तदा महाराजाधिराजः श्रीकण्ठीरव

नरसिंहराजः स्वपराक्रमेण तान् पराजितान् चक्रे । अपि च यदा भारतसिंहासनमाधिष्ठितवान् यवनाधिपतिरवरङ्गजेबिति विख्यातः पुरीममूं विजेतुमुद्युक्तस्तदा स्वबुद्धिचातुर्येणायं महाराजस्तेन सह संधिं कृतवान् । परंतु अष्टादशशतमाने राजकयान्तःकलहशिथिलीभूते निखिलभारते टीपूनाम्ना पुत्रेण सह हैदरिति विख्यातः कश्चित्पराक्रमी महम्मदीयो महिशूरपुरमाचक्राम । तावपि क्रमेणाङ्ग्लशूरैः पराजितौ बभूवतुः परलोकं प्रापितौ च ।

तदनन्तरं महिशूरदेशस्य राज्यभारो यदुवंशीयाय तृतीयश्रीकृष्णराजेन्द्रभूपाय प्रदत्तः । अनधिगतयौवनसामर्थ्यो राजा मतिमता मन्त्रिवर्येण श्रीपूर्णय्येन सह राज्यं सम्यक् शशास । कालक्रमेणाधिगतविशेषवैभवो विद्याविनयसम्पन्नः स्वयमेव क्रि. श. १८१२ तमे वत्सरे राज्यधुरामुवाह । परं तु प्रारम्भ एव तस्य नानाविधानि दुःखानि समजायन्त । राज्यपरिपालनक्रमो न सर्वथा पुष्पशयनोत्सव इति क्षिप्रमेव स्वानुभवेन स बुबुधे बुधोपमोऽपि राजा । निसर्गत रसराजा परमोदारश्च सत्यमार्गावलम्बी चासीत् । किंतु तस्यानुचराः केचन स्वार्थपरा भोगाभिलाषिणश्च बभूवुः । अत एव संस्थानप्रजानां जीवितानि दुःखमयानि समजायन्त । किंवदन्ती च सर्वासु दिक्षु प्रसारिता यथा 'राजा सर्वथाऽसमर्थ' इति ।

इमां क्रमेणाङ्ग्लप्रातिनिधिर्दिहलीनगरे श्रुत्वा स्वयमेव जग्राह राज्यधुराम् ।

क्रि. श. १८३१ तमे वत्सरे आङ्ग्लाधिकारिणो महिशूरराज्यसूत्रधारिणो बभूवुः । ततः प्रभृति पञ्चाशद्वत्सरपर्यन्तं महिशूरमही तेषां वशे कथमपि जीवनयात्रां विदधे । श्रूयते खलु एतस्मिन्नेव काले आङ्ग्लाधिकारिण इमां महीं पोषयामासुरिति । कालक्रमेण श्रीकृष्णराजेन्द्रोऽपि राज्यपुनः-प्राप्त्याशया दत्तस्वीकारविधिना शामराजेन्द्रं नाम कुमारमङ्गी-चकार । इमं स्वीकारमाङ्ग्लाधिकारिणोऽप्यनुमेनिरे । अपि च क्रि. श. १८८१ तमे वत्सरे अष्टादशवर्षदेशीयं कुमारं श्रीशामराजेन्द्रं राज्यलक्ष्मीः तं स्वयं वरयामास । साप्यलंकृता कन्येवानुरूपाय वराय यथाविधि दत्ता तैरधिकारिभिः । संप्राप्तराज्यश्री राजवरेण्यस्स श्रीशामराजेन्द्रोऽप्यपूर्वकान्त्या तेजसा च समेधते स्म । राज्यभारं त्रयोदशवर्षाणि धृत्वा सामर्थ्येन दुर्विधिवशादकालमृत्युनाहूतस्स्वर्गमापेदेऽचिरादेव ।

अस्य श्रीशामराजेन्द्रस्य ज्येष्ठपुत्र एव श्रीकृष्णराजेन्द्रः । स पितुर्मरणसमये केवलं दशवर्षदेशीयो बालकोऽभूत् । राज्याधिकारविधानेष्वनभिज्ञश्च बभूव । अतो महामातृ-श्रीरस्य मातैव राज्यधुरामुवाह महामेधाविभिर्मन्त्रिवर्यैस्सह । प्राप्ते चाष्टादशवर्षे निखिलकर्णाटकरत्नसिंहासनमधिरुरोह जाज्वल्यमान-

तेजसा च विराजमानः। अस्य विद्यागुरुः प्रथमे वयसि श्रीमान् राघवेन्द्रराविति विख्यातश्चोपाधिधरो बभूव। राज्याधिकारोद्वहनसामर्थ्यमधिगन्तुं दिवानिशं प्रायतत स महाराजः। राज्यलक्ष्मीरपि तमधिगत्यानुरूपं वरमभूतपूर्वया शोभया विरेजे। अचिरादेव स देवराडिव कीर्तिमनर्गलामभिपेदे प्रजानुरागं च लेभे। अधिगतसमस्तविद्यस्स्वभावतश्च विनयाभिरामगुणगणैः परिपूर्णः क्षात्रगुणोपेतश्च प्रभावृतः प्रद्योतते स्म। अपि च साहित्यसंगीतकलाभिमानी रसिकप्रियश्च मृगयादिराजोचितक्रीडाभिलाषविलसितश्च बभूव। कञ्चित्कालपर्यन्तं महीशूरसंस्थानवासी आङ्ग्लप्रतिनिधिः श्रीमान् फ्रेसरिति विख्यातस्तस्य मार्गदर्शकश्च बभूव राजकीयविषयेषु। अयं नृपतिः कतिपयेष्वेव संवत्सरेषु न केवलं प्रजाप्रीतिमापेदे परंतु तासामतीव पूजनीयो बभूव। तास्सर्वास्तं साक्षान्महाविष्णुमिव पूजयामासुः। पूर्वजैरनुसृतां पद्धतिमनुगच्छन् पाश्चात्यसंस्कृतेरपि गुणानेव गृह्णन् केनचिन्नवीनमार्गेण सर्वांश्चकार विस्मयाविष्टान्।

सिंहासनारोहणसमये भारतचक्रवर्तिप्रतिनिधिर्लार्ड्खर्जन् महाशयस्तमेवमाशीर्भिरेधयामास — “अयं महाराजः स्वयं परिचितप्रजासुखदुःखः। अतस्स्वराज्यशासनविषये स एव विजयी भवतीति सन्देहलवोऽपि नास्ति। विद्याविज्ञानाभिपूर्ण-

बुद्धिश्चतुरो नाविको झंझावातेरिते जलमध्ये नावमिव राजकीयां पदवीं निर्दिशति श्रमविहीन एव । यौवनमेव तस्य बलमारोग्यं च । पूर्वे वयस्येव लब्धभव्यपैतृकपदस्सकलगुणगणाभिरामो व्यद्योतिष्ट संपदुच्छ्र्येण सदा । भगवान् सर्वेश्वरश्चिरं तस्य सन्मार्गदर्शको भवतु इत्याशासे" इति ।

संप्राप्त राज्यश्रीसमागमो यौवनदशामापन्नस्स कालक्रमेण शुभग्रहवीक्षणाभियुक्ते मुहूर्ते रूपयौवनसंपन्नां काथेवाडदेशाधिपपुत्रीं कन्यां कांचन काञ्चनवर्णाङ्गीं महावैभवेनोपयेमे यथा पुरा महीभृतामीश्वरो हिमवान्नाम मनोरमां मेरुदुहितरम् । सापि नाम्ना प्रतापकुमारीति विश्रुता विवेश महाराजहृदयं लक्ष्मीरिव नारायणवक्षःस्थलम् । देशस्य संपदभिवृद्धिरिव मूर्तिमती विरराज राजमहिषी महिषासुरमर्दिनीसेवातत्परा निरन्तरम् । प्रजावात्सल्यपरिपूर्णहृदन्तराला मातृवत्परिपालयामास सर्वाञ्जनान् । राजा च पञ्चवत्सरानन्तरं कार्यगौरवाभिविष्टो वङ्गदेश प्रमुखपत्तनं कल्कत्तानगरं ययौ । तत्राङ्गलप्रतिनिधिमहाशयस्य राजातिथिर्बभूव । अपि च देशभक्ताग्रणीष्वेकतमस्स राजा राष्ट्रीयमहासभाप्रत्यङ्गभूतमौद्योगिकप्रदर्शनं स्वप्रातिनिध्येन रञ्जयामास । तदनन्तरमाग्रानगरं गत्वा जि.सि.यस्.ऐ. बिरुदाङ्कितो बभूव । महीपतिप्रत्यागमनकातराः प्रजास्तमभ्यनन्दयन्निमं वृत्तान्तं श्रुत्वा । राजनि प्रत्यागते समग्रे देशे राजभक्तिप्रेरितास्ताः प्रजा विविधानुत्सवान्वितेनिरे स्वानन्दप्रदर्शनोत्सुकाः ।

निखिलराजगुणोपेतस्स महाराजश्चिरकालं प्रजानुरञ्जनकार्यकरणनिमग्नो बभूव । स नृपतिर्दयासमुद्रो धर्मनिष्ठो दानपरश्चासीत् । तस्योदारदानैश्चिरं सम्यगभिवर्धितास्संस्थाने प्रजाभिवृद्धिपरायणास्सङ्घास्समस्ताः । कृषिरेवप्रधानवृत्तिः प्रजावर्गस्यास्मिन्देशे । कृषीवला एव देशोन्नतिकारका जनाः । तानेवाश्रिता समग्रदेशस्याभिवृद्धिः । तानेवोपकर्तुं स राजेन्द्रो दिवानिशमयतत । अपि च नवीनराज्यशासनानि चक्रे । स प्रथमं प्रजासु विद्याविस्तारणार्थं ज्ञानवृध्यर्थं च प्राथमिकशिक्षणक्रमान् क्रमबद्धान् यथाक्रमं प्रचक्रमे । प्रजाजीविकासौकर्योत्पादनार्थं देशेऽस्मिन् वृत्तिशिक्षणविधानानि संस्थापयामास । अपि च परस्परसहायकसङ्घान् देशस्यार्थिकसम्पदभिवृद्ध्यार्थं निर्ममे । प्रजाभिर्यथाशक्तिप्रदत्तं करं तासां भूत्यर्थमेवाग्रहीत् । न कदाचिद्धर्मविरुद्धमार्गेषु न्यायबाह्यैर्विधानैर्वा बलिं जग्राह ।

महिशूरपुरीमधिवसति चामुण्डशैलाग्रे निखिलजगन्नियन्त्री महिषासुरसंमर्दनसञ्जातरक्तबिन्दुप्रसिक्तसर्वावयवा, यत्राङ्कुरापाण्डुकपोलशोभा, कृपापीयूषवर्षनिर्मलीकृतावनतभक्तोत्तमाङ्गराजिः राजत्प्रभाराजितराजमुकुटाग्रविराजितदिव्यचरणारविन्दयुगला, आनन्दमरन्दबिन्दुसन्दोहधवलीकृतनिजवदनलक्ष्मीः, श्रीचामुण्डेश्वरी नाम महादेवता । तस्याश्चरणारविन्दधूलीकणान्विचिन्वन्तः समागच्छन्ति प्रतिदिनं जना जनपदेभ्यो विविधेभ्यः । तस्या देवालयोऽपि, लयवर्जितो, जिततारापथः, पथिककौतूहलवर्धनो, धनिकजनविस्मयीकरणचतुरश्चतुरस्रशोभी,

विचित्रचित्रोद्ग्रथितसमस्ताभित्तिस्सर्वेषां मनांसि समाकर्षति ननु। महामहिमा महाराजोऽपि महादेव्यास्तस्या भक्ताग्रणीः प्रतिदिनं पूजां विना कमपि कार्यारम्भं न करोति स्म। तच्चरणारविन्दपात्रोदक प्रक्षालितमौलिरेव चक्रे कार्यचक्रं चक्रपाणिसमतेजाः।

महीशूरदेशोऽपि नयनानन्दकरः कृतः कृपया महीपतिना राजवीथीषु देशस्य, शिवसमुद्रजलपातसम्भूता विद्युच्छक्तिर्दीपमाला व्याजेन प्रसरन्ती राजकृपेव दूरीकरोति तमोबाहुल्यम्। न केवलं प्रमुखनगरेषु निखिलग्रामेष्वपि प्रसारितेयं प्रदीपावलिः। यन्त्रोपकरणानि चाल्यन्ते प्रतिदिनमनया विद्युच्छक्त्या। गृहे गेहे विचित्रा प्रदीपाली रसिकानां मनांसि रञ्जयति। नगराणां प्रमुखविभागेषु लतालिङ्गिततरुशतपरीतानि, कुसुमगन्धवाहसेवितानि, आगन्तुकपरिश्रमपरिहारार्थमावृतानि मञ्जुलाशिलातलैः, सपिङ्गलकटावृतानीव बालतृणैः, ससङ्गीतकुशलानीव पिकमयूरशुकसारणहंसादिविहङ्गविरुतैः सश्रीणीव सहस्रदलनिबडीकृततडागैः सचन्द्रिकाणीव कृष्णपक्षनिशा समयेष्वपि विद्युद्दीपावलिभिः, सप्राणानीव केलिकलाकुशलैर्युवजनसहस्रवृन्दैः, सवालिनगराणीव वलीमुखसहस्रैः सशराणीव निशितकुशकेतकरेखाभिः, सतापसाश्रमाणीव कुशाङ्कुराग्रैः सकामशरासनानीव विविधवर्णालङ्कृतकाचसहस्रैः, सजलदेवतानीव धारायन्त्रैः, वर्णनातीतानि दिव्योद्यानानि निर्मितानि श्रीकृष्णराजेन्द्रेण सतां नगरवासिनामानिशमानन्ददायकानि। सायं समयेषु प्रत्यहं तत्रागताः

क्रीडारता बालका युवानश्च हसन्तः, जल्पन्तः, नृत्यन्तः पश्यन्तः चरन्तः, निद्रितामगोचरां वनदेवतामपि प्रबोधयन्ति ननु। वयोवृद्धास्तत्र समागत्य मनश्शान्तिमेव लभन्ते। कामकलाकलापकुशलाश्च युवानः कुञ्जेषु मदनाराधनतत्परा दृश्यन्ते। कवयो गूढचरा इव नृपेन्द्रस्य तत्र प्रविश्य जानन्ति विविधजनानां भाषणं,चारित्रमाचारं, धर्मं विशेषतश्च तेषामन्तःकरणसर्वस्वम्। वेदविज्ञानवैद्यशास्त्रकलाविद्याभिवृद्ध्यर्थं, सकलजनेषु ज्ञानप्रसारणार्थं च शालामन्दिराणि देशस्य नानाभागेषु शोभन्ते कण्ठाभरणानीव नगराधिदेवतायाः। नगरवनितानामपि नागरकविद्या विशोभते सर्वावयवेषु श्रीरिव कान्तिमती। तास्सर्वा देशकालावनुसृत्य प्राप्तविवर्तनास्सन्ति। ईदृग्विधारामशोभाभावादन्यत्र, चित्ताह्लादकशीतमारुतप्रवहणाच्चानिशं, भरतखण्डनानाभागेभ्यो विश्रान्तिकालेषु जनास्समागच्छन्ति समाकृष्टाः कञ्चित्कालमपि स्वर्गसुखमनुभवितुम्।

एवं स महामहेन्द्रः श्रीकृष्णराजेन्द्रचन्द्रः प्रजानुरागं सम्पाद्य चिरकालं राज्यं धर्मेण, सत्येन च महामेधाविभिर्मन्त्रिवरेण्यैः श्रीशेषाद्रि अय्यर प्रभृतिभिः सदा प्रजाक्षेमाय यतमानैरनिशं दत्तहस्तावलम्बः परिपाल्य, शरदभ्रशुभ्रां कीर्तिमात्मनो दिक्षु विदिक्षु प्रसार्य प्रजानां हृदयमन्दिरेषु शाश्वतं स्थानं लब्ध्वा स्वर्गेऽपि सुखमधिगन्तुं

क्रि.श. १९४० तमे वत्सरे आगस्ट् मासि चतुर्थे दिवसे दिवं प्रयातः । प्रयाते दिवं भूपतौ दुःखाम्बुधिनिमग्नाः प्रकृतयो बभूवुः । सर्वा नगरी शोकपूर्णाऽभूत् । अद्यापि दृश्यते प्रतिमन्दिरं स महाराजश्चित्रव्याजेन अमरनगरातिथिरप्यमरस्सञ्जातस्स्ववैभवेन, यशसा च । गच्छता कालेन यथाक्रमं सिंहासनमध्यरुक्षत् रोहिणीसहितचन्द्रमा इव मेरुशृङ्गं श्रीजयचामराजेन्द्रभूपो राजमहिष्या सह । चिरमभिवर्धतां यदुकुल-कीर्तिलता प्रजानुरागजलसेचन संवर्धिता ।

॥ इति श्रीनागराजविरचिते भारतीयदेशभक्तचरिताख्ये ॥

॥ नवीनगद्यकाव्ये श्रीकृष्णराजेन्द्रचरितं ॥

॥ समाप्तम् ॥



## ॥ २. श्रीराधाकृष्णचरितम् ॥

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥

'कालिदासः' —'विक्रमोर्वशीयम्'

अस्ति भारतदेशस्य दक्षिणादिग्भागे दिगङ्गनेव प्रत्यक्षीभूता मद्रपुरीति विख्याता नगरी। यस्यामनुरक्त इव समुद्रराजो निर्भरं तां स्वतरङ्गहस्तैरुपगूह्य अन्यैरननुभूतमानन्दमहरहः प्राप्नोति । प्रत्यहं यत्र समुद्रतीरे जनाः शतशस्सहस्रशश्च समागत्य प्रियबन्धुमित्रसमेताः चित्ताह्लादकरं मन्दमारुतमपि निषेवन्ते। नानादेशसमागताश्चाशुवार्ता अपि तत्र प्रणिधानेन शृण्वन्ति च। यत्र विशालराजमार्गेषु प्रतिक्षणं रटति विविधा शकटपाङ्क्तिर्विद्युच्छक्तिप्रभावसंचालिता कम्पयन्तीव वसुन्धराम्। तथापि निश्चला भूतधात्री जनाभिरक्षणतत्परा निखिलामपि बाधां सहते । तत्र तत्र नगरप्रधानभागेषु चलच्चित्रमन्दिराणि नूतनाकृतिधराणि रम्याणि, रञ्जनातुराणि नवीनोपकरणभूषितानि च

शोभन्ते यथा नववधूशरीरे चित्रविचित्रतराणि सुवर्णसदृशाभरणानि। अहन्यहानि सायंसमयेषु सहस्रशस्सम्मिलन्ति चित्रदर्शनार्थं जनाः। सन्ध्यावन्दनमपि हित्वा वटवः, गृहकार्याणि विहाय गृहिण्यः, विद्याध्ययनानि परित्यज्य विद्यार्थिनश्च चलच्चित्रदर्शनासक्तचित्ता रसिका इव रसास्वादनातुरा मदिरापाननिविष्टमतयश्शौण्डिकापणमिवानुरूपवेष भूषिता धावन्ति चलच्चित्रमन्दिराभिमुखम्। अपि च नौसहस्राणि समुद्रोपरी शोभन्ते ध्वजस्तम्भा इव देशविदेशा व्यावहारिक संपद-भ्युदयस्य। यन्त्रोच्चालिता नौकावलिः प्रत्यहं दृश्यते वमन्तीव धूम-पङ्क्तिम्, विरचयन्तीव तरङ्गमालाः, त्रासयन्तीव जलजन्तुराजिम्, विश तीव वायुमण्डलम्, पूरयन्तीव दिगन्तरालं, धिक्कुर्वतीव नभः प्रदेशं विजयनिनादेन सर्वदिक्प्रसृमरेण। देशाद्देशं क्षिप्रमेव जनान् पत्राणि वस्तूनि विविधानि च नेतुं विमानान्यपि दिने दिने विहगा इव विहा-यसा डयन्ते निरर्गलेन पथा च कर्णविवरभेदमसमर्थं शब्दमुद्गिरन्ति।

अस्याः पुर्या वायव्यदिग्भागे तिरुत्तणीति विख्याता काचित्पू-रस्ति। तत्रान्यवसतामेकदा पुरा विप्रदम्पती स्वधर्मः कर्मनिरतौ। नातिधनिकौ नातिदरिद्रौ च तौ बभूवतुः। तयोरेकदा जन्मान्तरपुण्य-संचय इव पिण्डीभूत उदभूत्पुत्ररत्नम्। पिता तस्य राधाकृष्ण इति नाम चक्रे। स बालो बालचन्द्र इव शुक्लपक्षे वृद्धिमवाप बाललीला-भिश्च पितरौ सन्तोषयामास। बाल्ये द्वादश संवत्सरपर्यन्तं पालिका-ह्लादकरयोः पुण्यक्षेत्रयोस्तिरुत्तणीतिरुपातिनगरयोरेव तस्य प्राथमिक-

विद्याभ्यासस्सम्प्रावृतत् । बाल्यात्प्रभृत्येव स राधाकृष्णः परविषय-ध्यानासक्तचित्तो दृष्ट्यगोचरप्रपञ्चास्तिक्यविषये दत्तविश्वासस्सदा ध्यानमग्न इव दृश्यते स्म । प्रथमतस्स एकान्तवासमेव बहु मन्यते स्म । स केवलं पुस्तकावलोकननिरतश्चाध्ययनासक्तो बभूव । पुस्तकान्येव तस्य परममित्राणि समजायन्त । प्रकृत्या स मृदुभाषी विनयावनम्रश्चासीत् । व्यर्थकालहरणं स कदापि न चक्रे । द्वित्रैरेव मित्रैस्स संभाषणादीन् कुरुते स्म । सर्वेषां जनानां जीवनयात्रासु विधिरेव बलात्कारेण मार्गं निर्दिशति खलु । दैवाधीनमेव निखिलमिदं जगत् । स्वाभीष्टेन केनचित्पथाऽभिगन्तुं सज्जोऽपि नरो दैवबलेनान्यत्र नीयते । शूरोऽपि पण्डितोऽपि वा नरो भाग्यविहीनस्तु न कदापि वृद्धिमेति । अत एव भाग्यशाली जायेत भुवि यदि नरो यशस्कामः । प्रकृते राधाकृष्णोऽपि तथैव भाग्यवतां धुर्येव गण्यते । संसारदुःखसहस्रमध्यवर्ती अपि स सर्वदा दृष्ट्यगोचरेण बलेन केनचिन्नीयते स्म । तेनैव दुर्लभां कीर्तिमौन्नत्यं च कालक्रमेणालभत ।

श्रीराधाकृष्णः स्वविद्याभ्यासं क्रैस्तमतीयकलाशालास्वेव चक्रे । प्रथमे वयस्येव क्रैस्तग्रन्थावलोकनावकाशस्तेन लब्धः । श्रीरामकृष्ण-परमहंसपरमभक्तस्य स्वामिविवेकानन्दस्य वक्तृवर्यस्य वाक्प्रवाहेणाकृष्टस्स भारतीयमतखण्डनं कृतं क्रैस्तमतीयैर्न किञ्चिदपि सेहे । भारतवर्षे पावनतमचरित्रा महर्षयश्चोपदेष्टारो यैरेवास्मत्संस्कृतिरद्यापि शोभते विशेषतश्च यैरेव निखिलज्ञानप्रसारः कृत इति जगद्विदितं केवलं ते

मिथ्यावादिन इति यदुक्तं तैरन्यमतीयैस्तद्बभूवास्याग्रहकारणम् । महर्षिभिरस्याः पुण्यभूमेर्विविधभागेषु प्रसारितस्तत्त्वसारस्सम्यग्विज्ञातस्सर्वैरपि जनैः। संसारसमुद्रमध्ये प्लवमानास्ते वेदान्तसारमित्थमजानन्-प्राणिनां जीवितकालोऽत्यल्पः सौख्यं च न विद्यत एव। राजा वा कृषीवलो वा कालक्रमेण म्रियते। निष्पक्षपातः खलु मृत्युः। मनसि परितुष्टे, अर्थवतां दरिद्राणां च भेदो न भवत्येव। मनश्शान्तिरेव ब्रह्मानन्दस्य मूलहेतुः। भारतीया अन्धाचारपरा इत्यवज्ञायन्ते सर्वैराधुनिकैर्जनैः । तथापि तादृशा धर्मपरा गुणशीलादिसमन्विताः पापभीरवः आस्तिकाः, निखिलभूमण्डले न कुत्रापि दृश्यन्ते। मतद्वेषो भारतीयेषु न कदाप्यविद्यत । सर्वे धर्मा भगवच्छक्तिप्रकटनसमर्था इति तैर्विज्ञातमभूत्। नदीनामोघा इव समुद्रे भिन्नमार्गा अपि निपतन्ति प्रलीयन्ते च। इत्यादि मूलतत्त्वं स बाल्य एव सम्यगधीत्य क्रैस्ताद्यन्यमतीयान् गोष्ठीषु प्रतिवक्तुं सज्जोऽभवत् गच्छता कालेन।

मद्रपुरीविश्वविद्यालये वेदान्तविद्यार्थी भूत्वा चतुरस्संवत्सरान् कलाशालायामधीत्य क्रि.श. १९०९ तमे वर्षे विद्याप्रशस्तिधरोऽभूत् । क्रैस्तमतीयेनापि शालाध्यक्षेण सम्यगभिनन्दितस्स राधाकृष्णो वेदान्तग्रन्थकर्ता चाभवत् केवलं विंशतिवर्षदेशीयः। तस्मिन्नेव संवत्सरे मद्रपुरीप्रौढकलाशालायामेव वेदान्ताध्यापको भूत्वा भारतीयवेदान्तविद्याध्ययनतत्परो बभूव। वेदान्तविद्यां धर्मशास्त्रं च सम्यगधीत्य स्वाभिप्राय-

मित्थं प्रकटीकृतवान्। धर्मो नाम कश्चन स्वतन्त्ररूपो नूतनानुभवः। प्राधान्यतः सोऽन्तर्मुखजनानन्दहेतुरेव भवति। निस्सारसंसारसागरमध्यादैहिकान्धकारमध्याच्च धर्मो नाम व्यक्तिमुद्धरते। धर्मज्ञानं खलु केवलं भावातीतं बुद्ध्यतीतं च। निराकारस्य निर्गुणस्य परब्रह्मणस्स्वरूपपरिचय एव धर्मस्य प्रथमसोपानम्। शुद्धान्तरात्मा नरो भगवन्तं प्रत्यक्षीकरोति। सत्यमन्वेष्टुं, न पाण्डित्यं परन्तु शुद्धान्तःकरणमेवात्यावश्यकम्। आचारपरो नरः क्रमेण धर्मनिष्ठो भवति। धर्मज्ञानं यदा परिपक्वस्थितिमाप्नोति तदैवाचिरेण भगवत्साक्षात्कारः सिध्यति।

जगन्मायामयमिदमिति विज्ञातुं श्रीराधाकृष्णः परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यस्य मायावादं, श्रीरवीन्द्रनाथठाकूरस्य कृतीश्च परमावधानेनापाठीत्। क्रि.श. १९१८ तमे वत्सरे स्वमतं पुस्तकरूपेण प्रकटीकृत्य कविवर्यरवीन्द्रस्याप्यभिनन्दनं प्रत्यपादि। तदनन्तरं महीशूरविश्वविद्यालये तस्मिन्नेव वत्सरे वेदान्तप्रधानाध्यापकोऽभूत्। अस्मिन्नेव समये कयाचिन्नूतनदृष्ट्याधीत्य प्रख्यातानां पाश्चात्यार्वाचीनवेदान्तविशारदानां पुस्तकान्यवलोक्य तेषु प्रकटितानभिप्रायान् सम्यग्व्यमृशत्। तेषां वैविध्यवादं धर्मान्तरितमित्यपि स्वाशयमुदघोषयत्। स्वयमप्यचिरादेव "समकालीनमीमांसायां धर्मस्य स्थानम्" इति संज्ञितं कञ्चिदुद्ग्रन्थं विरचय्य महामहिम्नामनेकेषां वेदान्तिनामभिनन्दनमलभत। अमेरिकाखण्डीयवेदान्तसङ्घाध्यक्षो वेदान्तविद्याकुशलो हिन्मान्निति प्रख्यातः, स्वकीये कस्मिंश्चिद्भाषणे पुस्तकमेतत्प्राशंसत्।

तत्पुस्तकमद्यापि न केवलं भारतीयकलाशालासु परन्तु परदेशीयशाला-स्वपि पठ्यपुस्तकत्वेनाङ्गीकृतम्। ततः प्रभृति प्रमुखवेदान्तग्रन्थकर्तृषु प्रधानस्थानमेत्र स प्राप्नोत्। अद्यापि स तथैव विश्रुतः।

बाल्यात्प्रभृति पुस्तकावलोकनं ग्रन्थविमर्शनमित्यादि तस्य नित्य-कर्मासीत्। महीशूरदेशे तदेव परां परिणतिमापादि। ग्रन्थाध्यय-ननिमग्नस्य तस्य निखिलमपि जगच्छून्यमिवाभाति स्म। अन्यादृशे-नैकाग्रचित्तेन सम्यगध्ययनं च करोति स्म। एकदाङ्गलचक्रवर्तिप्रति-निधिरमुं देशमागमत्। तस्य गौरवार्थं तं प्रत्युद्गन्तुं च सर्वे महा-ध्यापका विश्वविद्यालयाध्यक्षेण सह धूमशकटस्थानं निरयासिषुः। तस्यां गोष्ठ्यां राधाकृष्ण एव न दृष्टः। पृष्टश्चाध्यक्षेण सायंकाले किं नागतो भवानिति सहसैवं प्रत्युत्तरं सोऽदात् "ग्रन्थावलोकननि-मग्नोऽभवम्। तद्विषयोऽतीवमधुरोऽभूत्" इति। इत्थं सदा विषय-ग्रहणातुरो विमर्शक्रियादत्तोत्साहश्च मीमांसायां, नान्यत्र समाकृष्यते स्म। कतिपयसंवत्सरपर्यन्तमत्र महीशूरदेशे स्थितोऽपि प्रथितां मृगशालां द्रष्टुं न गतः। असकृदीजिप्तदेशं परियातोपि स्थितोऽपि तत्र "पिर-मिडि" त्यद्भुताकृतिधरान् जगद्विख्यातान् प्रोन्नताट्टान् न दृष्टवान्। असकृत्पाश्चात्यदेशं गतः। तथापि तत्र रमणीयतमदृश्यदर्शनार्थं न कदापि गतः। न तु तेषु श्रद्धाराहित्येन परन्तु परब्रह्मविषयचर्चा निमग्नत्वकारणेनैव भवितव्यम्।

तदनु क्रि. श. १९१९ तमे वत्सरे कल्कत्ताविश्वविद्यालये

वेदान्तविद्याप्रधानपीठं प्रथितं सर्वोत्तममिति समग्रे भरतखण्डे, समलंकर्तुं सगौरवमाहूतः। पण्डित 'मुयिरहेड्' नामधेयेन प्रेरितः मीमांसाग्रन्थद्वयं 'भारतीय वेदान्त' मित्याङ्कितं विरचय्य विश्वे विशेषगौरवमन्यैरलभ्यं सम्पाद्य भारतवर्षस्य प्रतिष्ठां गौरवं च परदेशेषु परविद्याप्रसारव्याजेन समतिष्ठिपत्। भारतीयवेदान्तं पुनरुज्जीव्य पुरातनग्रन्थसारं पुनरुध्दृत्य नवचैतन्येन च पूरयित्वा भूमण्डलस्य विविधविभागेषु गङ्गाप्रवाहसदृशेन स्वकीयवाक्प्रवाहेण मनोहरेण सभासदः पण्डितोत्तमान् न केवलं मुग्धानकृत किन्तु भारतीयसंस्कृतिवैभवसर्वस्वं तन्माहात्म्यं तदौन्नत्यं च सर्वेषामपि तेषां सूक्ष्मबुद्धिगोचरीकरणमिषेण निस्संदेहं विशदीकृतवान्। ये पाश्चात्यपण्डिताः पुरा पुराणग्रन्थकर्तॄन् तिरस्कारभावनया गणयामासुस्तेषामपि ग्रन्थान्तःप्रवेशावकाशं दत्वा पुरातनभारतीयानां वेदान्तज्ञानपरिपक्वस्थितिं निदर्शयामास। ततः प्रभृति ते सर्वे मुक्तकण्ठं प्रशंसाधाराः प्रभूतमभिवृष्य सगौरवं वेदान्तग्रन्थावलिं पश्यन्ति। सापि ग्रन्थराजिर्नूतनदृष्ट्या सस्यवनाभिरामा महीव महीयते मह्यामद्य विद्योतते चापूर्वशोभया कयाचिच्छ्रीराधाकृष्णदत्तया। इत्थमतन्द्रितश्रमवाहिना श्रीराधाकृष्णार्येण लब्धयशोऽभ्युदया वेदान्तविद्या सोत्साहमद्याप्यधीयते सर्वासु कलाशालासु। अयं पश्चात्पाश्चात्यपत्रिकासु वेदान्तविषयविमर्शात्मकप्रबन्धानुल्लिलेख। अनेनैव राजमार्गेण तस्य श्रीमतः कीर्तिलता व्यानशे समग्रभूमण्डलम्। संप्राप्तकीर्तिस्स महात्मा क्रि. श. १९२६ तमे वत्सरे आङ्ग्लमहाचक्राधिपत्यविश्वविद्यालयमहासभायामपि,

निखिलराष्ट्रीयमहासभायां भारतप्रतिनिधिर्भूत्वा प्रथमं चक्रे पाश्चात्यदेशयात्राम् । अभूतपूर्वं स्वागतं तस्मै दत्वा भारतीयसंस्कृतिरेव मूर्तिमती समागताचास्मान्विनोदयितुं पवित्रीकर्तुं चेति मेनिरे सर्वे तत्र सम्मिलिताः पण्डितोत्तमाः । भाग्यवती खलु पुण्यभूमिरस्माकं प्रीतिपात्रं भारतमाता यैवं भाग्यशालिनं पुत्रं प्रसूय प्राप्नोति परां काष्ठां परमानन्दस्य ।

तत्रोपन्यासमालाभिरुद्घोषयामास भारतीयवेदान्तसारसर्वस्वम् । प्रारब्धकर्मफलभुक् खलु मानवः । सत्यमेव परब्रह्मस्वरूपम् । सत्यान्वेषिणः खलु सर्वे महर्षयः । सम्प्रदायनिबद्धं मानवस्य जीवितं सत्यज्ञानप्रतिबन्धकं भवति । इत्यादि सम्यक् वर्णयित्वा सन्दर्शयामास तेषामाधुनिकनागरिकतायामामुष्मिकाचिन्तनाभावम् । अमुमेव भावनासमूहं कतिपयवर्षानन्तरं 'कल्कीत्याङ्कितेन पुस्तकरूपेण मुद्रापयामास । अस्मिन्नेव पुस्तके नागरिकताभवितव्यता रमणीयरीत्या चित्रिता जनानां जनयति बुद्धिविकासम् ।

क्रि. श. १९२८ तमे वत्सरे आंग्लदेशे आक्सफर्ड् नगरे माञ्चेस्टर कलाशालायामध्यक्षस्थानं पुरा जे. इ. कार्पेण्टरित्याख्येनालङ्कृतमलङ्कर्तुमधिकारिभि राहूतस्सन् भरतखण्डस्याखण्डकीर्तिं संस्कृतिं च दिक्षु विदिक्षु विस्तारयितुं बद्धदीक्षः पुनः परदेशयात्रामङ्गीचकार स महात्मा । तत्र शतशस्सहस्रशश्च समागतानां विद्यार्थिवर्याणां पुरतः प्रोज्जगौ प्रभावभरिताभिस्सारवतीभिस्सरस्वतीभिराधुनिकसमाजस्य परिस्थितिं च दुःस्थितिं विशेषतः । मानवः स्वबुद्धिशक्त्या विज्ञान-

परिशोधनैर्जीवनरीतिमभिनवीकरोति । दशशतविधानैर्ज्ञानं विज्ञानं चाभिवृद्धिमाप्नोति । परन्तु परमदुःखास्पदमेतद्, यत्तत्त्वज्ञानमत्र न किंचिदपि वर्धितं नापि अनुभवगोचरं कृतम् । ऐहिकसुखसंतोषनिमग्ना जनाः स्वार्थपरा भूत्वा न केवलं स्वजनान् किन्तु निखिलजगन्नियामकं भगवन्तमपि विस्मरन्ति । स भगवानेव तेषां सुखानां कारणमिति विस्मृत्य नास्तिकवादमेवारभन्ते पण्डिताः । मानवसुखस्य मनश्शान्तिरेव प्रथमसोपानम्; ऐहिकसुखानि क्षणभङ्गुराणि । तत्त्वज्ञानपरिणतिरेव प्रधानस्थानमलङ्कर्तुमर्हति । शाश्वतसुखावाप्तिरेव स्पृहणीयः श्रेयोभिलाषिभिरास्तिकैर्जनैः । परमेश्वरे गुणातीते भक्तिरभ्यसनीया स्थापनीया च निश्चलाचिरात् । निस्स्वार्थतैव जनानामभिवृद्धिं स्थिरीकरोति । अनेनैव राजमार्गेण परब्रह्मरूपं विज्ञेयमधिगन्तव्यं च । इत्यादि स्वमनोऽभिप्रायं विशदीकृत्य कृतकृत्यतामापेदे स श्रीमान् राधाकृष्णस्तान् विस्मयाविष्टानपि विततान ।

सन्मार्गदर्शिनी चैषोपन्यासमाला श्रीराधाकृष्णमुखानिस्सृतैर्वाक्यसुमनोभिर्निगुम्फिता स्वसुगन्धं प्रसार्याघ्राणचतुरान् जनाननेकशश्च समाचकर्ष । प्रख्याततत्त्वज्ञानपण्डिताः पाश्चात्यदेशे ये ये सन्ति ते सर्वेऽप्यमुमेव भारतीयवेदान्तसारं श्रुत्वा परमानन्दभरिता महामहिमानं श्रीराधाकृष्णं प्रशशंसुः । क्रि. श. १९३३ तमे वत्सरे सर्वाण्यमूनि भाषणानि 'पाश्चात्य पौरस्त्य धर्म' इत्यङ्कितेन पुस्तकरूपेण मुद्रितानि । अस्मिन्पुस्तके भारतीयधर्मसार एवं निबोधितोऽस्ति । धर्मः खलु वर्तते न्यायकरणे, दयादर्शने, समस्तजनसुखप्रदाने च । अयमेव

महर्षेर्ध्येयः। स खलु समदर्शी। तस्य न कोऽपि द्वेष्यो नापि प्रियश्च भवति। सर्वजन्तुप्रियस्स सत्यमेवाश्रयते धर्ममेवोपदिशति च। इत्यादि भाषणानि कृत्वा परदेशेऽपि स महात्मा निरुपमामापेदे कीर्तिं चन्द्रिकाधवलाम्। परदेशीयपत्रिकाश्चामुं मुक्तकण्ठं प्रशशंसुः।

क्रि. श. १९३० तमे वर्षे महीशूरमहीमहेन्द्रेण सदा वेदान्तचर्चावगाहनातुरेण श्रीकृष्णभूमीन्द्रेण समाहूतः उपाधिप्रदानमहोत्सवसमारम्भे प्रधानाध्यक्षस्थानमलंचकार। तत्संवत्सरीयस्नातकानुद्दिश्य वेदान्तार्थगर्भितं, धर्माभियुक्तं, सत्यान्वितं, गङ्गाप्रवाहसदृशमनर्गलं भाषणं कृत्वामूल्यमुपदेशं ददौ। रजतोत्सवस्मारकमुपन्यासं च महीशूरपुरभवने पौराानुद्दिश्य चकार। राजापि तस्य समागमेन लब्धमनश्शान्तिस्तेन सह संभाषणनिरतः स्वयं पण्डितस्सगौरवं तमभ्यमन्यत।

सदायं महाभागः शुभ्रवस्त्रालङ्कृतः, हसन्मुखः प्रकाशमाननेत्रद्वयाराञ्जितः, समुन्नतशिरोग्रीवः स्फुरदुपनयनमण्डितश्च प्रथमावलोकन एव करोति सर्वान् मुग्धान्। स्वजनाभिपोषणतत्परो महाकुटुम्बी अनेकानेकोचितव्यवहारनिमग्नः सुखमहानुभवशीलोऽपि अपरावतार इव भगवत्पादाचार्यस्येत्यद्यापि संकीर्त्यते भारतीयैर्जनैः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशङ्कराचार्यवचनानुसारेण स जीवन्मुक्त इत्युक्तौ सर्वथातिशयोक्तिर्न भवत्येव। यद्यपि सन्यासीवासौ न जटिलो न काषायवस्त्रधारी न लुञ्चितकेशो, नापि हस्तार्पितकमण्डलुस्तथापि स वेदान्तविद्याविशारदस्सदा तत्वज्ञाननिरतश्च विस्मयीकरोति सर्वानस्मान्।

र्बाह्याडम्बरैर्बाह्यवेषैर्वा न कश्चन वेदान्ती भवति, परन्तु यस्यात्मा सदा परध्यानतत्परो यश्च परविद्याध्यानतत्परश्च शुद्धाद्वैतवादनिरतश्चास्ति स एव तत्वतस्तत्त्वज्ञानी। अत एव श्रीराधाकृष्णोऽपि ज्ञानयोगिनामग्रगण्यस्सदा परब्रह्मध्याननिरतश्चेत्यद्यापि विश्रुतः।

सभायां जननिबिडायां वक्तुमारभते यदा मीमांसामुद्दिश्य स राधाकृष्णस्तदा विजयते ह्यपूर्वशोभया तस्य वाग्विलासः। अविच्छिन्ना निरर्गला, कान्तिमती सा भाषाधारा प्रवहति मनोहरी, मञ्जुला च मुग्धान्विदधती समागतान् पण्डितोत्तमानपि। तस्य जिह्वातले विभाति भारती नाट्यरङ्गे वीणामिव वादयन्ती। श्रीराधाकृष्णे वक्तृवर्ये वक्तुमारभमाणे सर्वे जना गाव इव भगवतः श्रीकृष्णस्य वेणुगानारम्भे विमोहिता भवन्ति। अथवा व्यालग्राहिणः पुरतः फणिन इव तद्गीतश्रवणमुग्धाः शिरःकम्पनरताः परवशास्सन्ति। तस्य भाषणधारा न केवलं भारतीयान् किन्तु परदेशीयानप्यार्द्रीकरोति। चातकविहङ्गमा इव वर्षासमयमेघमालां तस्य भाषणमालां प्रतीक्षन्ते किल विद्वांसो निखिलमहीमण्डले।

आसीत् खलु कर्मयोगिनामग्रणीः, अहिंसातत्ववादी, भारतस्वातन्त्र्यसमरचक्रवर्ती, भगवद्गीतापारायणानुष्ठाननिरतश्च, सर्वभूतहिते रतस्समदर्शी, हरिजनसेवासमुद्धरणबद्धकङ्कणो, दीनदरिद्रजनसहस्रसमावृतात्मकुटीरोऽप्यजातशत्रुः प्रतिदिनं प्रार्थनासभासमागतशतसहस्रजनानुयातः, परममेधावी, भगवद्भक्तशिरोमणिर्निखिलभूमण्डलव्याप्तस्वमहिमा महात्मा गान्धीति विख्यातो युगपुरुषः।

स यमनियमानुष्ठानतत्परः प्रख्यातानामस्माकं पुरातनानां महर्षीणां जीवितरीतिमेवास्मत्स्मृतिपथे वितनोति स्म स्वदिनचर्यया नूतनभारत-राष्ट्रनिर्मातेति विश्रुतश्च स दिगन्तराले। तस्य महात्मनोऽनुयायिवृन्देऽप्यसंख्याते श्रीराधाकृष्णोऽप्येकतमः। तस्मिन्नतीव गौरवं चादरश्च तस्य भवति। एकदा परदेशयात्राप्रस्थानपूर्वं श्रीराधाकृष्णो महात्मागान्धी-मुखादाशीर्वादकांक्षी तस्य मनोहरमाश्रमपदमगमत् सेवाग्रामे स-भक्त्युन्मेषं च सेवाकरणबद्धदीक्षः। तत्पुरतः स्थित्वा साञ्जलिबन्ध-मेवं विज्ञापयामास 'महात्मन् भवानेव भारतीयवेदान्ततत्त्वाधारः। वयं खलु मन्यामहे यद्वयमेव वेदान्तशास्त्राध्यापका वेदान्तिन इति। तन्मिथ्यैव। भवानेव तत्वतस्तत्ववेदिता यतो धर्मनीतिस्वरूपोऽसि त्वम्। भवन्तमेव धर्मस्थापनाचार्यमाश्रिता वयम्। न केवलं वीतरागाणां मार्गदर्शको भवान् परन्तु सर्वेषामस्माकं च। पञ्चमवेदे महाभारते द्रौपद्या एवमुक्तम्:—

'कुले महति जातास्मि दिव्येन विधिना किल।
केशग्रहमनुप्राप्ता कामं जीवेत मादृशी' ॥

किन्तु सैापि स्वदृढभक्त्यैव विजयमापेदे लोकविश्रुतम्। ममापि भवानेव भारतीयो मूर्तिमानिव धर्मः संस्कृतिश्च प्रत्यक्षमिति भाति। तस्मादेव, देवप्रतिम नान्यो भवादृशो विद्यते। भवन्तमेव शरणागतोऽहम्' इति। अनेन श्रीराधाकृष्णस्य महात्मनि सुदृढा भक्ति-र्व्यक्ता भवति।

तदद्भुतमेधाशक्तिविस्मितश्चाङ्ग्लचक्रवर्ती 'सर' इत्युपाधिना तमलंचकार । प्रपञ्चराष्ट्राण्यपि यथाविधि स्वविश्वविद्यालयेषु तस्य विविधान् महोपाधीन् वितीर्य गौरवार्थमेवं संभावितवन्ति । तदनु आचार्यवर्यश्रीराधाकृष्णस्तु भारतीयानां पुण्यप्रदे तीर्थेषु श्रेष्ठतमे वारणासीमहाक्षेत्रे भारतभूषण पूजनीय पण्डित मदनमोहनमालवीयस्थापिते हिन्दूविश्वविद्यालये कुलपतिर्भूत्वा नानादेशागतानां विद्यार्थिनां सेवातत्परश्च दिने दिने विस्तारितयशोवितानः कीर्तिधवलितश्च विद्योतते स्म प्रद्योतन इव नभोमण्डले दिक्षु विदिक्षु प्रसारितसहस्रकिरणराशिः ॥

अधुना भारतस्वातन्त्र्योदयानन्तरं देशसेवाकरणोत्सुकः रूसियादेशे भारतीयप्रातिनिधिपदमलङ्करोति ॥

॥ इति श्रीनागराजविरचिते भारतीयदेशभक्तचरिताख्ये ।

॥ नवीनगद्यकाव्ये श्रीराधाकृष्णचरितं ॥

॥ समाप्तम् ॥



## ॥ ३. दीनबन्धुआण्ड्रूसचरितम् ॥



अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥

'सुभाषितम्'

अस्ति निखिलभूमण्डलमण्डनायमाना, श्वेतमानवानां द्वीपसमूहे महीमण्डलविख्याते ख्यातवृत्ते तारामण्डले ध्रुवतारेव द्योतमाना लण्डन् नगरी, सकलाङ्ग्लचक्राधिपत्यराजधानी, धनकनकधान्यसमृद्धिवर्धिताहर्म्यसम्पच्छ्रेणिः । तरङ्गरङ्गनर्तितनौकावलिः सदा तुषारवितानाच्छादितनभोविभागा धवलांशुकावृतवे विराजमाना, शीतलोदका, कनकचूर्णसन्निभपुलिनप्रदेशावृता, शैवलाञ्चिततीरप्रदेशा, नौसञ्चालनक्रियासंजातधूमधूसरनीरा तामसाख्या तरङ्गिणी नगरीमभितः प्रवहति श्वेतजनप्रमोदकारिणी । तस्यास्तीरे वारं वारं विश्रान्तिकालेषु जनाश्शतशश्च मिलित्वा सुखेन संलापमाधुर्यरञ्जितधियो व्यपनयन्ति कालम् । जनबाहुल्येन स्थलाभावाच्च नगर्यां धूमशकटा भूगर्भ एव सञ्चलन्ति ।

तत्र हर्म्याणि बहुरमणीयानि चात्युन्नतानि तारापथचुम्बिशिरोदेशानि विभान्ति भासा निर्जितजिष्णुपत्तनमन्दिराणि कयाचिदपूर्वकान्त्योल्लसन्ति एकत्र क्रीडाङ्गणप्रदर्शितात्मार्थियुवकजनोत्साहा, अन्यत्र विविधविमानोड्डयनजनितमहाशब्दबधिरितदिक्कुहरा, अपरत्र नानाविधशकटारटनताडितवसुमतीप्रदेशा, सर्वत्र कार्यगौरवादितस्ततः प्रचलज्जनसमूहालंकृतनवीनरथ्यापाङ्क्तिश्च विजयते विशेषवैभवाट्टहासभरिता राजधानीश्वेतजनानां नयनमनोहारिणी नगरी। तत्र प्रपञ्चविख्यातेषु विश्वविद्यालयेषु ज्ञानार्जनं कुर्वन्ति विद्यार्थिनस्समागता नानादेशेभ्यः। विज्ञानपरिशोधनप्रदत्तधियः प्रतिदिनं पण्डितास्त्वध्ययनं त्यक्तनिद्राहारादिसुखा योगिन इव कुर्वन्ति।

एवंविधविधानाभिशोभितस्याङ्गलदेशस्योत्तरभागे न्यूकासाल्लिति नाम्नि नगरे क्रि. श. १८७१ तमे वत्सरे फेब्रवरिमासे द्वादशे दिवसे शुभग्रहवीक्षणादिभिरत्यन्तबलसंयुक्ते शुभदिने सदाचारसंपन्नयोः परस्परानुरागबद्धयोर्दम्पत्योः कश्चन प्रभाशाली शिशुः सञ्जातः। अन्यादृशजननीनिर्मलप्रीतिपयस्संवर्धितशरीरः पदे पदे तन्मुखादुत्सृष्टधर्मबोधप्रवाहविमलीकृतबुद्धिर्बाल्यात्प्रभृति स बभूव धर्माचारनिविष्टधीः। बालचन्द्र इव शुक्लपक्षे वर्धमानोऽपि पञ्चवर्षदेशीयस्स शिशुर्बालारिष्टपीडितो दुःखमतीवान्वभवन्बहुमासपर्यन्तम्। प्रेमरसार्द्रहृदयया मात्रा दिवानिशं सेवितः क्रमेण प्रपेदे कतिपयमासानन्तरं देहारोग्यम्। अयं रोगस्तमकरोन्मातृभक्ताग्रणीं जननीपवित्रप्रेमवेदितारं च क्रमेण। तादृशं क्लेशं विषह्य यो महानुपकारो मात्राकारि जन्मसहस्रैरपि तस्य

प्रत्युपकर्तुं न शक्यत इति निस्सन्देहमजानात् स बालकः क्रमेण । व्याधिपीडितस्य पुत्रस्य पुरस्तात् सा भगवतोऽव्याजकरुणारसमदर्शयच्च । सर्वशक्तियुक्तो दयामयः सर्वदुःखनिवारणपटुः स भगवानिति चोपदिदेश । स्वशयनस्य पुरतः स्थिताच्चित्रपटात्क्रिस्तप्रभोर्वाहिनीं प्रेममयीं दृष्टिं दृष्ट्वा मुहुर्मुहुस्तयाकृष्टः स्नातश्च पूतो बभूव स बालः । करुणामूर्तिस्तस्य हृदयतले तदाप्रभृति शाश्वतीं प्रतिष्ठामकरोत् ।

एकदा प्रभाते रोगग्रस्तस्य परमक्लेशमनुभवतः तस्य शय्यासमीपे सुगन्धभरितं पुष्पमेकं मात्रा निवेशितं तस्य मनश्च नयने चकर्ष । नवीनसौन्दर्यकान्तिविद्योतितकुसुमदर्शनसन्तुष्टस्य तस्य मुखकैरवे मन्दहासप्रकटीकृता धवलदन्तपङ्क्तिरानन्दचन्द्रिका मन्दं मन्दं ताण्डवं कर्तुमारेभे । ततः प्रभृति व्याधिरपि तत्पीडनकर्मणो विरराम । मेने स बालकोऽपि तत्पुष्पं मूर्तीभूतामिव भगवतः प्रसादं निजजननीप्रार्थनालब्धममूल्यमन्यैरलभ्यं च । तदाप्रभृति बालोऽपि निखिलब्रह्माण्डनायके भगवति बद्धदृढभक्तिभावश्च बभूव । इत्थं आण्ड्रूसिति नामा स शिशुः केवलं शैशव एवोन्मीलितान्तश्चक्षुः क्रमेण हृदयवैशाल्यमापेदे ।

तस्य वंशद्वयमपि दीर्घायुर्योगविलसितमभूत् । पिता तस्य धर्मवीरोऽपि धर्मोद्धारकार्ये च बद्धकङ्कणोऽपि नवनीतकोमलहृदयो दयामयश्च बालकप्रियो बभूव । क्रैस्तधर्मीयवेदग्रन्थाबद्धविश्वासश्च रोगिबाधानिर्मूलनसमर्थोऽपि सञ्जातः । दिने दिने क्रैस्तस्य पुनरागमनं प्रतीक्षितं तेन । इत्थमाश्चर्यभयकुतूहलादिजननीभिरवस्थाभिः क्रम-

शस्तस्याण्डूसस्य बाल्यमतिचक्राम। प्रथमाविद्याभ्यासोऽपि तस्य बर्मिङ्घाम् नगरे कृतः, पश्चात्प्रौढविद्याभ्यासं कर्तुं केम्ब्रिड्ज् नाम विख्यातं विश्वविद्यालयं जगाम।

अत्रान्तरे विचित्रतरा काचिद्घटना समुद्भूत्। कयाचिदपवित्रभावनयाविष्टहृदयस्स महनीयो गच्छन्नपि मातापितृभ्यां सह प्रार्थनार्थं देवमन्दिरं मनश्शान्तिं न लेभे। एकोनविंशतिवर्षदेशीयस्य तस्य प्रौढकलाशालाप्रवेशसमये प्रज्ञाविकासस्सञ्जातः। अन्तःकलहस्य परमावधिः प्राप्ता। एकदा अर्धरात्रे प्रार्थनामारचयतस्तस्य चावाङ्मुखस्योपरि पुष्पवृष्टिरिव पपात करुणामयी काचिद्दैवी प्रसन्नता। तीर्थस्नातमिव पवित्रीकृतमात्मानममन्यत स प्राप्तमनश्शुद्धिः। नवचैतन्यभरितः प्रबुद्ध इव प्रक्षालित इव प्रोत्तारित इव प्रद्योतित इव बभौ चन्द्रमा इव वर्षात्यये निरम्बुदे निर्मले नभोमण्डले। सर्ववस्तुषु दत्तसमदर्शनस्तदाप्रभृति पुनर्जात इव बभूव। दीनसेवयैव दीनबन्धुर्भगवान् तृप्तिमाप्नोति सर्वथा इति मेने। भगवद्दर्शनं विश्वविद्यालयेषु वा श्रीमतां धनिनां गेहेषु वा न संघटते; किन्तु सदा दुःखसमुद्रमज्जनशीलानां शाश्वतशोकदग्धहृदयानां दरिद्राणामेव जनानां मध्ये। यः खलु मानवो दीनजनोद्धरणाय सर्वस्वमपि त्यजति स एव भगवत्प्रीतिपात्रतामेति।

जीवितमार्गे काचिदज्ञाताप्यगोचरा शक्तिर्नयति जन्तून् विस्मयजननी। केचित्तां कथयन्ति प्राचीनजन्मान्तरवासनेति, कचिद्दैवी शक्तिरिति वदन्ति, अपरे तु भगवतः कृपेति। सर्वशक्तिमय्या तया

नीयमानः जीविताम्बुनिधौ प्लवते नरः । तस्य कलाशालाध्ययन समये विज्ञानपरिशोधनक्रियाः प्रारब्धाः पण्डितैः सरभसं ववृधिरे । क्रैस्तधर्मग्रन्थसूत्राणामर्थस्तस्य पित्रा प्रतिपादितो वैज्ञानिकानां प्रत्यक्षप्रमाणनिरूतानामर्थेन सह विरोधमेवाविष्कुरुते स्म । वैज्ञानिकार्थमेवावारीकृत्य स्वाभिप्रायं पत्रमुखेन् पितुरन्तिकं प्राहिणोत् । अथ पितापि पत्रमेतत्प्रपठ्य महतीमेव व्यथामापेदे । विश्रान्तिदिनेषु गृहमागतः पुत्रोऽपि पित्रा सह विवादमारभ्य परस्पराविरोधवृद्धिहेतुरेव बभूव । अनेनैव कारणेन कालक्रमेण तस्य पिता हृदयबाधाभिधां व्याधिपीडां संप्राप । सा पितुः पीडा आण्ड्रूसस्य परमदुःखकारिणी समजायत । व्याधिपीडितं पितरं द्रष्टुमपि न समर्थो बभूव । वैद्योऽपि "सर्वे भवन्तो जागरूका भवन्तु" इति तस्य पुत्रादीनाज्ञापयामास । अतस्स पुत्रः "विरुद्धविवादेन पितरं न करोमि सर्वथा व्याधिपीडितम्" इति निश्चिकाय, बाह्याचारैरेव केवलं पितरं तोषयन्निव प्रदर्शयन्नात्मानमन्तरात्माविरोधक्रिया एव समाचरन्नासीत् कञ्चित्कालम् । प्रार्थनां तु प्रतिदिनमतिजागरूकश्चकार । अस्याः कष्टदशाया निवारणार्थं साञ्जलिर्भगवन्तं प्रतिक्षणमभ्यर्थयामास । एवंविधेनैव क्रियाकलापेन तस्य कतिपयसंवत्सरा कालचक्रे गताः । पित्रोर्मुदे तदाविरोधमेव प्रदर्शयामास ।

अस्मिन्नेव समये बेसिल् वेस्ट्काटिल्याख्येन सहाध्यायिना केनचिन्मैत्री समुत्पन्ना । सा कालक्रमेण गाढा संजाताप्येकदेहन्यायावलम्बिनी चासीत् । तन्मित्रोपदेशेन धैर्यमेवावलम्ब्य पितुर्देहारोग्य

भगवदधीनमिति निश्चित्यान्तरात्मनिर्देशविरोधमारचयितुं नोत्सह्य आत्मनः प्रार्थनाकेन्द्रस्थाने मठं विससर्ज । सत्यान्वेषणतत्परश्च धर्ममार्गावलम्बी स महात्मा अमुमेव मार्गमभ्यनन्दत् । वस्तुतस्तु स क्रैस्तस्य महामहिम्नश्चान्तःकरणपूर्वकं दासानुदासो बभूव । विश्वविद्यालये विद्याभ्यासमपि विहाय विधिदुर्विपाकग्रस्तानां, व्याधिपीडितानां दारिद्राणां, दुःखितानां च मध्ये स्ववासमकरोद्यदा तदैव मनोनिर्वृतिमभूतपूर्वामन्वभवत् ।

जातिभेदमगणयित्वा विविधदुःखपीडितान् सर्वान् जनान् दुःखादुद्धर्तुं कृतमनोनिश्चयो विवाहबन्धनविमुखस्सन् ब्रह्मचर्यलब्धब्रह्मानन्दः केम्ब्रिड्ज् विश्वविद्यालयीय सन्यासिसङ्घसदस्यो बभूव । जातोऽपि परदेशे दुःखदारिद्र्यादिकष्टपरम्पराशिथिलितजीवितसर्वस्वान् भारतीयजनानुद्धर्तुं भारतराजधानीभूतमिन्द्रप्रस्थनगरमाजगाम । आङ्गलदेशस्य विविधभागेषु दीनसेवातुरस्य तस्य परममित्रस्य बेसिल् वेस्टकाट् नामधेयस्य कालराव्याधिपीडितस्य मरणवार्तैवास्मै भारतागमनावकाशं ददौ । अनेकधर्मनिबिडीभूते भरतवर्षे या अनेकाः कष्टसाध्याः समस्याः प्रादुर्बभूवुश्च ता अपि तस्य न केवलं बुद्धिविकासं किन्तु भगवतस्सर्वान्तर्यामित्वे दृढं विश्वासं च वर्धयांचक्रुः । अत एव भारतागमनं तस्य जीवितं नवीनेन केनचिदुदात्तत्त्वेनाभ्युदयदायिना पथाऽनैषीदपुनाच्च ।

अस्मिन्नेव समये स्वकीयकलाशालाध्यक्षेण श्रीमता सुशीलकुमारुद्राभिधेन सह गाढा मैत्री विविधविषयपरिवर्तनचतुरा सञ्जाता ।

आण्ड्रूस्महाशयेन सह स रुद्रो हिमगिरिशिखरमत्युन्नतं परमसुखप्रदं साक्षाच्छ्रीरुद्राधिष्ठितं योगिनां हृदयानन्दसमर्थं प्रतिवत्सरं गच्छन्नासीत्। कदाचित् रुद्रस्य पुत्रद्वयमपि तावनुसरति स्म। रुद्रस्तु द्वितीयपुत्रजननादारभ्य, व्याधिग्रस्तायाः सहधर्मिण्या मरणानन्तरं तद्वियोगसंजातदुःखभरणेऽप्यसमर्थस्तुषाराद्रिशिलातलेषु शान्तिमेव भार्गयन् पुरा पुरारातिरिव सतीविरहतप्तस्तपसि स्थितः संचचार सखिभिः सह।

कोटिघडे नाम्नि प्रदेशे हिमवत्पर्वतसन्निकर्षे योगिवर्यसाधुसुन्दरसिंहेन सह निरन्तरं नित्यानन्दतृप्तस्य मौनिव्रतमाचरतः साम्युयल् स्टोक्स् नाम्नो महापुरुषस्य मैत्री संजाता तस्य। साधुसुन्दरसिंहोऽपि क्रैस्तनिबद्धदृढभक्तिश्च, सर्वे महापुरुषा निस्संशयं देवांशसंभूताः, सर्वत्राभेदभावेन पवित्रं वस्तु प्रशंसनीयं पूजनीयं चेति धर्माधर्मविवेकसंपन्नश्च, सर्वधर्मान् समतादृष्ट्यैवाङ्गीचकार। सर्वे धर्मास्सत्यमेवोपदिशन्ति; भगवान् खलु एक एव निखिलब्रह्माण्डनायकः। "स खलु युगे युगे देशे देशे च धर्मसंस्थापनार्थाय दुर्मार्गगामिनां शासनाय च सन्मार्गप्रतिष्ठापनाय भिन्नरूपैरेवात्मानमाविष्करोति" इति सर्वधर्मसारं तत्त्वतो जग्राह, जीवन्मुक्त इव च संचरति स्म। अस्य मैत्री आण्ड्रूसस्य हृदयकमलं मैत्री कान्तिरिव चोन्मीलयामास। प्राप्तहृदयपरिवर्तनस्स महात्मा संकुचद्भावं विहाय चोदारचरितानां महापुरुषाणां धुरि कीर्तनीयो बभूव।

भारतीयसेवासमितिप्रधानपुरुषस्य भारतजनोद्धरणक्रिया-

बद्धकङ्कणस्य महामेधाविनः श्री. गोपालकृष्ण गोखले इति विख्यातस्य निदेशं शिरसि प्रसादपुष्पमिव धृत्वा क्रि. श. १९१३ तमे वत्सरे दक्षिणाफ्रिकाखण्डाभिमुखं प्रस्थितोऽभूत् आण्ड्रूस् महाशयः। धनार्जनप्रेरितानां भारतीयकृषीवलानां कर्मकराणां च जीवितोपायाकृष्टपरदेशगमनानां स्थितिरतीव दुःखजनन्यासीत्। नीतिविरुद्धमार्गावलम्बिनो बभूवुस्तत्रस्था प्रभुवर्गाः। एतेषां दीनजनानां कष्टनिर्मूलनार्थं महात्मा गान्धी सत्याग्रहमेव प्रारभ्य तत्राधिकारिवर्गे भयाङ्कुरमेवार्पयामास। अस्मिन्नेवावसरे स सत्याग्रहक्रियासंचालक इति सेनापतिः स्मट्साख्यो प्रभावशाली राज्यधुरन्धरस्तं कारागारे सहानुयायिभिर्नि-बन्ध। अस्य महात्मनस्सहायार्थं प्रेषितस्स आण्ड्रूसो राज्याधिकारिभिस्सह सन्धिमार्गमुपक्रम्य विजयपताकां स्थापयामास। पश्चात्प्रपञ्चस्येतरभागेषु दीनसेवातुरस्स आण्ड्रूस महाशयः संचचार। सर्वत्र च भारतीयदीनजनानां दुःखशोकसहस्राणि संपूर्णं निर्मूलयामास।

अनेन नूतनानुभवेन परिक्षालितान्तःकरणो विशदीकृतमनोभावपरिवर्तितधर्माभिप्रायः, प्राप्तज्ञानोदयो दयामयो बुद्ध इव ज्योतिश्चक्रवर्ती कलापरिपूर्णः पूर्णचन्द्र इव बभासे। सन्देहसन्दोहो निर्मूलिततमः प्रकाण्ड इव मार्तण्डमण्डलोद्भूतरश्मिजालेन धावितः। अथ भारतीयकवीन्द्ररवीन्द्रठाकूरेण शान्तिनिकेतनं प्रति, आगमनाय तस्याह्वानं प्रेषितम्। तदाह्वानमुररीकृत्य सगौरवं, तत्र जगाम कवीन्द्रस्य विद्याभिवृद्धिकार्ये कृतोत्साहस्साहाय्यमवे प्रदातुं यथाशक्ति। प्रथमसमागमे स कवीन्द्ररवीन्द्रस्य जाज्वल्यमानमुखारविन्दस्याग्रे स्थातुमपि न शशाक

तारकापतिरिव रवेरग्रे। दर्शनादेव देवेन्द्रसमतेजोराशेस्तस्य रवीन्द्रस्य बन्धविमुक्तमिवात्मानममन्यत च। ततः प्रभृति पण्डित इव समदर्शी सर्ववस्तुषु, निर्मूलितारिषड्वर्गः, प्रशान्तहृदयश्चाद्वितीये भगवति निबद्धदृढभक्तिर्दीनजनावनतत्परश्च बभूव।

लब्धभारतीयजनसंपर्कः क्रमेण तेषां राजकीयसामाजिकार्थिकदुःस्थितिं विदित्वा तन्निर्मूलनार्थमतन्द्रितः प्रयत्नान् कर्तुमारेभे। केनचिदितिहासकर्त्रा यदुक्तं "पराधीनश्चिरकालपर्यन्तं यः कोऽपि देशस्स क्षिप्रमेव राष्ट्रीयावनतिमाप्नोति" इति तत्सर्वथा सत्यमिति भारतदेशपक्षे बहूदाहरणैरसकृदुद्व्यक्तमभूत्तस्य। विषयसुखानीव परकीयराज्यभारसुखानि प्रारम्भेऽमृतोपमान्यपि परिणामे विषोपमान्येव। आत्मगौरवाभिपूरितं यत्किञ्चिदपि राष्ट्रं न कदापि सहते हि पराधीनताम्। स्वयमेव पारतन्त्र्यदुःखदग्धानां भारतीयजनानां दुरवस्थां वीक्ष्य परमकरुणार्द्रीकृतान्तःकरणो विशालहृदयस्स महानुभाव आण्ड्रूस्नामा स्वातन्त्र्यसमरसन्नाहक्रियानिविष्टधियां धमितां त्यागिनां राष्ट्रनायकानामेकतमो भूत्वा स्वयमाङ्ग्लोऽपि स्वकीयजनाचरितमपराधं विज्ञाय भरतवर्षं बन्धनविमुक्तं कर्तुमुद्यतोऽभूत्। दुःखसाध्या खलु स्वातन्त्र्यसाधनक्रिया। स्वार्थत्यागेनैव न तु क्रूरकर्मभिर्हिंसात्मककार्यैर्वा भारतराष्ट्रस्य स्वातन्त्र्यं सिध्येदिति प्रथमं दृढीचकार स महाशयः। स्वार्थत्यागाहिंसादिपरमोत्तमान् गुणान् स क्रमेण परममित्रयोर्महामहिम्नोर्महात्मगान्धीरवीन्द्रठाकूरयोर्बद्धमूलानिव ददर्श। तावेव भरतवर्षमहानायकस्थानमलंकर्तुमर्हाविति च ज्ञातवान्। महात्मा

गान्धी स्वातन्त्र्यमन्त्रगन्धं गन्धवाह इव भारतीयजनसमूहे प्रसारयामास। स्वचारित्रेण शीलेन महर्षिसदृशेन जीवितेन च स तेषामनुकार्यो बभूव। आण्डूसपि तस्य सहवासेन क्रैस्तधर्मसारं नवीनविधानेनोपदिष्टमिव जग्राह। "भगवानेक एव; सिद्धिहेतवः पन्थानस्तु भिन्नधर्माश्रयिणोऽनेके सन्ति; भगवद्भक्त एव तमचिराल्लभते इत्यादि परमवेदान्तसारं वस्तुतश्चाजानात्।

संप्राप्तनूतनानुभवस्स क्रमेण हिन्दूमहम्मदीयधर्माश्रिताननेकान् महात्मनोऽपश्यत् मनोविकासं च लेभे यथेच्छम्। अचिरादेव स्वदेशीयैर्जनैर्भारतीयेषु जनेष्वाचरितमक्षम्यमपराधमक्षरशोऽग्रहीत्। "ये मानवाः शुनि श्वपाके च ब्राह्मणे वेदपारगे, स्त्रियां रूपवत्यां च समदर्शिनस्सन्ति त एव नूनं सर्वेश्वरं सर्वजगन्नियामकं भगवन्तं द्रक्ष्यन्ति" इति यदुक्तं धर्मग्रन्थेषु तत्सत्यमिति बुबुधे स बुधोपमः। जातिवर्णसमुद्भूतं द्वेषं विनाशयितुं कृतनिश्चयो बभूव च।

अत्रान्तरे क्रि. श. १९१४ तमे संवत्सरे परस्परद्वेषवर्धको जगच्छान्तिभङ्गकारणपटुर्विमानोड्डयनजनितमहाशब्दपूरितदिगन्तरालो, निमज्जन्नौकासहस्रसंक्षोभिततरङ्गमालाभयङ्करमहोदधिश्रेणिः, रणव्रणदुन्दुभिध्वानबधिरीकृतश्रुतिमार्गो नूतनयन्त्रोद्गतधूमधूसरितनभोमण्डलः सहस्रलक्षकोटिसैनिकारूढहयपद्धतिजनितधूलिकणसंवृतमेघराजिरयोनिर्मितासिशस्त्रपाणिसैनिकावलिनिबिडीकृतप्रदेशो भूभारहरणसमर्थो महासमरः प्रादुर्भूतः। नीतिविरुद्धोऽपि समरमार्गो मानवयज्ञकरणपटुः क्रैस्तधर्मोपदेशसारविरुद्धोऽपि, सत्यमार्गान्तकोऽपि, क्रूरकर्म-

बाहुल्यादसह्यरूपोऽपि, नीचवृत्तिरपि सर्वथा सद्भिर्दूष्योऽपि, देशप्रेम-प्रेरितस्य चाण्डूसस्य हृदये स्वकीयदेशस्वजनविजयस्पृहामेव जनयामास। प्रथममित्थंभूतोऽपि पश्चात्पश्चात्तापतप्तान्तःकरणो रणोत्साहविमुखो बहुधा आत्मानमतीव निनिन्द । अथ समरं स्वधर्मोपदेशविरुद्धं भयंकरमसह्यं च मेने। अत एव समाहूतोऽपि सेनाप्रवेशनाय केनाचित् बलात्कारनियमेन नोत्सहते स्म तत्र प्रयातुम्। अनेनैव मार्गेण स हृदयविकासं लब्ध्वा भगवतानुगृहीतमिवात्मानं मेने ।

तदनन्तरं सदा दीनजनप्रियस्य धनिकैः प्रपञ्चस्य नानाविभागेषु कर्मकारान् स्वेदोदकस्रावार्जितयत्किञ्चिद्धनानकिञ्चनान् प्रति कृतमत्याचारं समीक्ष्य खेदाविष्टमनास्तान् कथंचिदुद्धर्तुमुद्युक्तोऽभूत्। जनसमाजे केवलमल्पसंख्याः कतिपये जना एव धनलक्ष्मीकटाक्षवीक्षणाकृष्टा प्रभूतं धनं संचिन्वन्ति; परन्तु बहुसंख्याश्चेतरे जना दारिद्र्यदैवताराधनतत्पराश्चात्मनो वस्त्राहारार्थमावश्यकमपि धनमलब्ध्वा दुःखसागरे निरन्तरं निमज्जन्ति। एतदेव तस्य धर्मविरुद्धं न्यायविरुद्धं, मर्मभेदकं च बभूव। अचिरादेव सञ्जातो धनवृद्धिसमुद्भूतमदोन्मत्तानां धनिकानां संचितार्थः दास्यमिव समर इव परमासह्यः, पापवृद्धिकरः, स्वार्थलोभमदमत्सरादिदुःस्वभावजनकः, राष्ट्रीयभावदूरीकरणसमर्थः, खण्डनार्ह एव सर्वदा सर्वदेशेषु सद्भिरार्यैश्च धर्ममार्गनिरतैः। क्षुत्पीडितानामन्नं, दिगम्बराणां वस्त्रं, दरिद्राणां धनं, यदि न दीयते धनिकैर्धिक् तान् धनमदाविष्टान् स्वार्थपरान्। समाजान्तःकरणशुद्धयर्थं, तदन्तःपरिवर्तनार्थं च सर्वथा सर्वदा यतेत नूनं यः कश्चिद्देशभक्तः

केवलमहिंसात्मकैरेव मार्गैरिति निर्णीतवान् सः। नूतनसमाजसृष्टि-दत्तचक्षुश्चतुर्मुख इव सर्वतोमुखो दिवानिशं विना निद्राहारादिसुखे-रन्तःकरणपूर्वकं यतते स्म तदाप्रभृति। भरतवर्षोपदिष्टमहिंसा-मार्गं धर्मं चानुयातुं पाश्चात्यदेशास्सर्वेऽप्यचिरेणैव कालेन सज्जा भव-न्तीति भव्यवाणीं कथयति स्म सोऽसकृत्स्वकीयभाषणेषु कृतेषु विवि-धस्थानेषु।

आत्मीयोन्नताशयाविष्करणक्रियानिमग्न इव महोन्नताकृतिधरः, रजततन्तुनिभाभिः श्मश्रुकेशराजिभिः परिवृतमुखारविन्दो भासमान इवा-परः सहस्रभानुः किरणावलिसमेतः, अव्याजकरुणारसार्द्रनयनारवि-न्दयुगलः, सदा मन्दहासविकसितसिताननपंकजः, धैर्यशौर्यौदार्यगा-म्भीर्यादिमहागुणसमुज्ज्वलः, सर्वदा सत्यव्रतनिरतः, अहिंसानियमे स्थितः, साधुजनसंवृतः, विद्याविनयसंपन्नः, दीनजनानुरक्तः, दयावा-रिधिः स्वकीयधर्ममतीतस्सर्वेषां मनांसि समाचकर्ष। जितारिषड्वर्गो यतिरिव न कस्मैचिदपि चुकोप। महर्षिरिव न किमपि धनमाचकांक्ष तस्य न किंचिदपि वस्तु त्रिषु लोकेषु स्वकीयमभूत्। दिवानिशमय-तत दीनजनसेवातत्परो निस्स्वार्थबुद्धिः। गच्छन् मार्गे स्वदृष्टिपथे प्रविष्टं यं कमपि दीनं दिगम्बरं स्वकीयवस्त्रावृतं कृत्वा, समाश्वास्य मृदुवचोभिस्तं स्वयमपि दिगम्बरो भूत्वा गृहं प्रति निवर्तते स्मा-सकृत्। तादृशं तस्य दयार्द्रं हृदयान्तरालम्। तस्य कार्यदर्शिनी मिस्. अगाथा हारिसन्नाम्नी काचिदाङ्ग्लाङ्गना एवं कथयति स्म "आण्ड्रूस महाशयः शिशुरिव सर्वदा मातृरक्षणे स्थातुमर्हतीति"।

गान्धिनो महात्मनः कोशाधिकारी प्यारीलालः इत्थमकथयदेकदा। पुण्यपत्तने एकदा रोगग्रस्तः शस्त्रचिकित्सार्थं गान्धी महात्मा वैद्यशालायां न्यवसत्। आत्मानं द्रष्टुमागतायाण्ड्रूसाय शकटशुल्कप्रदानाय दश रूप्यकाणि ददौ। सायमयं तु अण्ड्रूसः पुनरागत्य दश मुद्रा नष्टा इत्युक्त्वा शकटशुल्कं प्यारीलालमयाचत। एतच्छ्रुत्वा गान्धी महात्मा गभीरवाचा स्वकार्यदर्शिनमाक्षिपन् कथयामास 'सर्वथा दशमुद्राः पूर्वं प्रदत्ता नष्टा न किन्तु कस्मैचिदभ्यर्थिने दत्ता एव'। शिशुरिव नायं जानाति धनमूल्यम्।

महात्मा गान्धी तमुद्दिश्यैवं लिखति। 'आण्ड्रूस् महाशयो विद्याप्रचारकार्यनिमग्नेषु जनेषु सर्वोत्तमः। स्वमित्रमध्यक्षरुद्रमुपकर्तुमेवाङ्ग्लदेशादभ्यागतः। अन्ते च निखिलराष्ट्रीययशःकान्तिधवलित शान्तिनिकेतने सेवादीक्षां धृतवान्। स्वजीवितसर्वस्वमपि तस्य कृते समर्पयामास'।

तस्य मरणात् कतिपयदिनेभ्यः पूर्वं तं द्रष्टुं कल्कत्तानगरीयवैद्यालयमगच्छत् महात्मा गान्धी। स दीनबन्धुरेवं तमवादीत् "महात्मन् यूरोप् खण्डे महान् खलु समरस्संप्राप्तः। भारतीयानां स्वराज्यमागमिष्यतीति मन्ये। भारतदेशः क्षिप्रमेव स्वतन्त्रो भविष्यतीति निस्सन्देहं प्रतिभाति मे"। 'अहमपि जाने' इति प्रत्युत्तरं ददौ स महात्मा। रोगग्रस्तोऽपि स दीनबन्धुः प्रशान्तचित्तश्च मन्दहासविकसितनिजवदनारविन्दः स्वस्थमना व्यजायत। भगवत्कृपारसधाराभिरभिषिक्त इव परिपूत इव असाधारणतेजोराशिविद्योतित इव

ददृशे। तदनन्तरमचिरादन्तर्मुखो भूत्वा, अनेकदुःखशिथिलीभूतं पञ्चभूतात्मकमात्मनः कलेबरमुत्सृज्य संप्राप भगवच्चरणारविन्दमकरन्दसदृशीमवस्थाम्। अद्यापि यशश्शरीरेण दीनजनानां मध्ये जीवति निवसति च। तस्य मरणेन न केवलमाङ्गलदेशो वा भारतदेशो वा दुःखाम्बुधिनिमग्नः परन्तु निखिलभुवनवासिनो दीनजना वज्राहता इव कञ्चित्कालं किंकर्तव्यताविमूढाश्चाभवन्।

श्रुत्वा तन्मरणवार्तां हृदयशोकवर्धिनीं कवीन्द्ररवीन्द्रठाकूरश्चेत्थमकथयत्। "आङ्गलजनेष्वत्युत्तमः, क्रैस्तधर्मानुयायिषु प्रथमस्थानालंकरणार्हः, मानवगुणगणोपेतः, श्रीमान् दीनबन्धुर् आण्डूस् महाशयो मम परमसुहृदासीत्। तस्य निस्स्वार्था धैर्यावलम्बिनी विशालदृष्टिः प्रकाशते सहस्रकृत्वः प्रभूततमा मरणादनु। समग्रभारतदेशस्तस्मै चिरायाधमर्णः सञ्जातः। आङ्गलसाहित्याकृष्टेऽपि मयि पूर्वे वयसि क्रमेण तस्य निस्सारतया आङ्गलजनानां प्रति गौरवमल्पीकर्तुं व्यवसिते च मयि, तदैवास्य महात्मनो दीनबन्धोर्मैत्री चातर्किता समागता च, वृद्धे मयि निर्गलन्तमभिमानमालम्बे। आण्डूस्सदृशाश्चाङ्गलजना न केवलमात्मनो मित्राणि परन्तु मानवकोटिसमुद्धरणक्रियानिबद्धकङ्कणा जगन्मित्राण्येव" इति।

॥ इति श्रीनागराजविरचिते भारतीयदेशभक्तचरिताख्ये ॥

॥ नवीनगद्यकाव्ये श्रीदीनबन्धुआण्डूसुचरितं ॥

॥ समाप्तम् ॥

## ॥ ४. बालगङ्गाधरतिलकचरितम् ॥

—❖—

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥

'सुभाषितम्'

अस्ति भारतीयलण्डन्निति विश्रुता भरतखण्डीयार्थिकसम्पदभिवृद्धिमूलहेतुभूता मुम्बई नाम नगरी। सैव प्रधानपुरी पश्चिमाब्धिपरिवृता भरतवर्षेऽत्यन्तविस्तृतस्य मुम्बईनाम्नो विषयस्य । तस्मिन् महाराष्ट्रमिति पुरातनेतिहासप्रसिद्धं महाराष्ट्रमन्वर्थनामधेयं किञ्चिदस्ति यदलंकरोति सर्वतः प्रसृता पश्चिमाद्रिपङ्क्तिशाखावलिः। यस्य प्रधानोपवर्तनं पुण्यपत्तनमिति विख्यातं पुण्यतमं पुण्यजनैरसूयाविष्टदृष्टिकोनेनाहतं नयनानन्दकरं दृश्यते मूलानद्या विभक्तमध्यभागम्। पुण्यनगरीमभितो वर्तते वर्तुलाकारधरा धराधरपङ्क्तिर्नागरिकजनसायंपर्यटनप्रधानभूमिः । यस्यां महाराष्ट्रमहानायक इति भारतेतिहासप्रसिद्धपुरुषस्य शिवाजीनाम्नो महाराजस्य जयप्रसादवर्षिणी लोकैक-

माता भवानी भवेन सह निजावासं करोति। अद्यापि विजृम्भते महा वैभवेन तस्या महादेव्या देवालयः प्रतिदिनं समाहूतभक्तकोटिवृन्द-वन्दितचरणारविन्दायाः। स्वभावतस्तत्रत्या जना दृश्यन्ते बाहुबलपरिपूर्णाः। अपूर्वसौन्दर्यराजितवदनारविन्दलक्ष्मीता-ण्डवप्रेरितमन्दहासमुद्वहन्त्यः, कामकलाप्रावीण्यमिव प्रदर्शयन्त्यः, समुन्नतकठिनस्तनद्वन्द्वप्रदीप्तवक्षःस्थलेन, बहिरंशुकरेखासंविभक्त-नितम्बबिम्बद्वयेन पथिकजननेत्रसहस्रमपि युगपदाकर्षयन्त्यः, गज-गमनातिरिक्तमृदुपद्धतिसन्ताडितभूमिभागाः, शीर्षान्तपरिदृश्यमान-वक्रसीमन्तरेखाविलसितकेशहस्ताः, अर्धचन्द्राकृतिधरसुरभिकुसुममा-लालंकृतधम्मिल्लाः युवत्यो यत्र युवकानां क्षणप्रदानेनेक्षणानि संतोषयन्ति। प्रियैस्सह सहकारपल्लवकोमलाङ्ग्यः, गिरिशिखराणा-मुपरि प्रतिदिनं सायंसमयगन्धवाहाघ्राणतत्पराः कालं यापयन्ति शृङ्गाररसास्वादनमदमत्ताः, रतिसहायद्विगुणीकृतोत्साहभरितेन मद-नेन निरन्तरदत्तालम्बनविभवाः।

महाराष्ट्रेषु रत्नगिरिर्नामान्यतमो रमणीयविभागोऽस्ति। यत्र गिरिरत्नानि रत्नाभरणानीव भुवं विभूषयन्ति। गिरिगह्वरेषु निवसन्तो जनाः प्रकृत्या बलिष्ठा अपि करुणातिथ्यादिगुणार्द्रान्तःकरणा एव भवन्ति। तत्र रत्नगिरिनाम्नि पुरवरे गङ्गाधररामचन्द्रतिलकाभिधः कश्चन द्विजकुलोत्पन्नः सदाचाररतो महापण्डितोऽन्यवसत्। स प्रथममु-पाध्यायवृत्तिमवलम्ब्य तत्रैव शालाबालकानध्यापयति स्म। क्रमेण स पुण्यपत्तने शालापरीक्षकस्थाने नियुक्तः। तस्य पूर्वजा महाराष्ट्रेतिहास-

प्रख्यातचरिता बभूवुः। तस्य क्रि. श. १८५६ तमे वत्सरे वंशस्य तिलकप्रायो बालगङ्गाधरतिलक इति पुत्रोऽजायत। स केवलं शैशव एवासाधारणमेधाशक्तिं प्रादर्शयत्। स्वपितृवत् गणितशास्त्रे चोपदेशक्रियायां निपुणो बभूव। परन्तु मानवः पुराकृतानां कर्मणां फलमनुभवत्येवेष्टं वानिष्टं वापि। दुरतिक्रमणीयो हि विधिः। बलवान् खलु कर्मविपाकः। अत एव बालगङ्गाधरतिलके षोडशवर्षवयस्के विधिदुर्विपाकात्तस्य पिता परलोकमयासीत्। दिवंगते पितरि नष्टसारथिरिव विमानः स मोहनिगीर्णोऽप्यनधिगतप्रपञ्चज्ञानो भूमौ पपात। पितृवियोगं सोढुमशक्तोऽपि धैर्यमवलम्ब्य स्वविद्याभ्यासं यथाविधि चक्रे। विंशे वर्षे विश्वविद्यालयप्रशस्तिधरो भूत्वा, तदनन्तरं त्रिभिः संवत्सरैरेव न्यायशास्त्रेऽपि नैपुण्यमवाप। अस्मिन्नेव सुसमये तस्य अगर्करेण केनाचिन्महोदयेन सह सख्यमजायत। उभावपि राज्याधिकारान् तिरस्कृत्य जनेभ्योऽत्यन्तोपयुक्तविद्याप्रदानाय शालां प्रौढकलाशालां च स्थापयामासतुः।

तौ तदनु महात्मभिरन्यैरपि त्रिभिर्मिलित्वा पञ्चपाण्डवा इव साधयामासतुः श्लाघनीयां क्रियाम्। यतस्तौ 'मराठा' 'केसरी' इत्यङ्कितं पत्रिकाद्वयमविलम्बितमेव प्रारभेताम्। एतौ पत्रिकासम्पादकौ महोत्साहभरितौ निष्पक्षपातदृष्ट्या शासकाधिकारक्रिया विमृश्य तस्यातिशीघ्रमेवानर्थपात्रं भूत्वा जन्मनि प्रथमं कारागारदुःखमन्वभवताम्। तथापि द्विगुणितस्फूर्तियुतौ नव्यान् कार्यकलापान् देशोद्धरणोद्देशेन कृत्वा क्रि. श. १८८४ तमे वत्सरे पुण्यपत्तने दक्षिणापथशिक्षणसङ्घ-

स्थापयामासतुः । अस्य सङ्घस्य सदाश्रये 'फेर्गूसन् कालेजि' ति जाता प्रौढकलाशाला केवलमेकेनैव वर्षेण प्रादुरभूत् । अद्यापि सा विजयते पुण्यनगर्यां महाट्टहासेन प्रत्यब्दं वितरन्ती सहस्रादूर्ध्वसंख्येभ्यो युवकेभ्यो युवतीभ्यश्चातुलं विद्याधनं त्यागशीलविलसितपण्डितमुखेभ्यः । पञ्चहायनपर्यन्तं शालाभिवृद्ध्यै श्रममगणयित्वा दिवानिशं प्रयत्नान् कृत्वा तिलकः केनापि कारणान्तरेण शालां विससर्ज । क्रमेण पत्रिकाद्वयस्यापि प्रधानसंचालको भूत्वा स महात्मा सुहृद्विसृष्टोऽपि न विसृज्य धैर्यमार्यभूषणमुद्रणालयं स्वमित्रयोः केलकर, गोखले नाम्नोरधीनं चक्रे । प्रजाभ्युदयक्रियासमुदयदत्तचित्तोऽपि न्यायशास्त्रपरिचयं विद्यार्थिभ्यः कारयितुं शालावर्गानपि चोपाक्रमत ।

पण्डितोत्तमकुलोद्भूतस्य, विद्याविनयसम्पन्नस्य, नरतिलकस्य, बालगङ्गाधरतिलकस्य हृदये प्रकृत्या गीर्वाणविद्यायामभूदभूतपूर्वा तीव्रासक्तिः । बाल्यादपि वेदशास्त्रसाहित्येतिहासतर्कादिभिः प्राप्तपरिचयो वेदानां पुरातनस्थितिं परिशोधयति स्म विश्रान्तिकालेषु । स्वकीयेनैव केनचिन्नवीनमार्गेण परिशोधनक्रियाः प्रारभ्य, पण्डितगोष्ठीरपि विस्मयाविष्टाः कृत्वा अभिनवसिद्धान्तानाविश्चकार । इत्थमसामान्यप्रज्ञावैभवं पाश्चात्यपौरस्त्यविद्वद्भ्यः प्रदर्श्य स महामहिमा कीर्तिं दिगन्तविश्रुतामचिरेणैवातुलां लेभे । अपि च ज्योतिःशास्त्रप्रमेयाधारनिबद्धान् नवीनविषयानुपलक्ष्यीकृत्य समारब्धेन संशोधनेन 'निस्संशयं वेदाः पुरातनतमाः' इति साधयित्वा तत्सम्बन्धिविषयानखिलान् संगृह्य प्रबन्धरूपेण लण्डननगरे क्रि.श. १८९२ तमे वत्सरे सम्मिलितायै निखिलराष्ट्रीयपौरस्त्य-

सभायै प्रेषयामास। तदनु स्वसंशोधनसंग्रहसर्वस्वं ग्रन्थरूपेण प्रकाशयांचक्रे "वेदानां पुरातनस्थितिसाधने कृताः संशोधनक्रियाः" अथवा "सप्तर्षिमण्डलम्" इति नाम्ना। एतत्पुस्तकमद्यापि विद्वन्मनोरञ्जकमनेकनवीनविषयपरिचयप्रदानशीलमतीव प्रख्यातमस्ति। अनेन शाश्वतीं प्रतिष्ठां धवलतरां कीर्तिं चावाप स तिलकमहाशयः।

अत्रान्तरे तस्य सखा कश्चन बापट् नामा बरोडाशासकैरारोपितदोषो दण्डनार्हो भूत्वा महाकष्टदशायामस्तीति वार्तामश्रृणोत् सः। मित्रसहायार्थं साक्षान्मित्र इव तत्र गत्वा तस्य विषयाकाशे स्थितान् दुःखमेघान् स्वभाषणकिरणैर्दूरीचकार, प्रतिवादिभयंकरश्च भूत्वा न्यायास्थाने सिंहनादमिव कृत्वा तत्रस्थान् कान्दिशीकानिव विद्रावयामास। श्रूयते खल्वद्यापि स तिलको वाक्दूकवृत्तिमवालम्बिष्यत न्यायास्थाने प्राड्विवाको भविता। वाग्विवादचतुरोऽपि तद्वृत्तिविमुखोऽभूत्।

भारतीयराष्ट्रीयमहासभामत्युत्साहेनाचिरादेव विवेश कतिपयवर्षपर्यन्तं दक्षिणदेशस्थायिसमित्याश्च कार्यदर्शी बभूव। पुण्यपत्तनेऽपि नगरसभासदस्यो भूत्वा तत्रैव एकादशवार्षिककांग्रेस् सम्मेलनकार्यदर्शिस्थानमलंचकार। परन्तु राष्ट्रीयाङ्गभूतसामाजिकसम्मेलनसंचालनविषये भिन्नाभिप्रायप्रादुर्भावात् तत्स्थानमुत्ससर्ज; तथापि कान्ग्रेसीयक्रियाकलापसत्समाप्तये प्रायतत। तदनु क्रि. श. १८९६ तमे वत्सरे मुम्बई विषये समस्ते आहाराभावमृतनागरिककलेबरसमाच्छादितमार्गे; आहारार्थमितस्ततो गच्छद्भिर्बालस्त्रीवृद्धैर्जनैरावृतपण्य-

वीथिकः, उपवासकृशानां शिशूनामाक्रन्दनाक्रान्तदिक्चक्रवालः, प्रावृट्समयेऽपि जलदसमूहरहितविहायाः, जलपातसंपर्कराहित्येन प्रभूतधूलिधूसरितभूप्रदेशः, शुष्ककासारवापीतडागादिप्रदेशः, तृणसस्यविहीनमहीपर्यटनवृथाजातायासमृतपशुवर्गः, दारुणदुःखप्रदो जनेषु स्वार्थवर्धको, धनिकहृदयकाठिन्यकर्ता, महाकरालः क्षामकालो विधिदुर्विपाकाद्वा, कलिकालपापाभिवृद्धिकुपितमहेन्द्रशापाद्वा, क्रूरकर्मनिरतः समजृम्भत। दृष्ट्वा स्वयं जनानां कष्टपरम्परां, हृदयविद्राविणीं स्थितिं, श्रुत्वार्तनादं दरिद्राणां, नारीणां शिशूनां दुर्बलानां जनानां च राजकीयरङ्गं विहायार्तानामार्तिहरणाय स तिलकः सज्जोऽभवत् निमिषेणैव कालेन। राज्याधिकारिसहायेनैव तत्र तत्र विशेषतः षोलापुरे नागपुरे चापणानुद्घाट्य आहारसम्भारान् जनेभ्योऽदापयत्सुलभरीत्या। समयोचितविधानैर्यथाशक्ति प्रजानामीतिबाधास्संहृत्य तासामनुरागं, गौरवं च विशेषेण लेभे।

तथैव यदा पुण्यपत्तने 'प्लेग' नाम विस्फोटकमहाव्याधिरागत्य शतशो जनकवलीकरणनिमग्नोऽभूत् तदा श्रीमान् तिलकमहाशयः तेषां भवाम्बुधौ निमज्जतां भगवत्करावलम्ब इव स्वसहायमदात्। विद्राणे राजकीयनायकगणे व्याधिग्रस्तं पत्तनं विहाय स्वात्मरक्षणमात्रदत्तधिषणे, तिलकमहोदयो दयार्द्रहृदय एक एव साहसेनापायभूमावेव तिष्ठन् वैद्यशालाः स्थापयित्वा स्वपत्रिकायां प्रबन्धानुल्लिख्य सर्वानाश्वासयामास। अनेन निरन्तरोद्यमेन न केवलं प्रजाः पर्यपालयत् किन्तु राज्याधिकारिणश्च विस्मयस्तम्भीभूतान् चक्रे। सदा महाराष्ट्र-

कीर्तिपताकास्थापनाचार्यवर्यशिवाजीमहाराजेनानुष्ठितां नियमावलि-मेवानुसृत्य तथैवात्मानमपि राष्ट्रोद्धरणकार्यमग्नं कर्तुमुद्युक्तोऽभूद् भूतपूर्व-स्फूर्तिपूरितहृदयान्तरालः ।

अत एव शिवाजीस्मारकगृहं विशिथिलितं समीक्ष्य प्रतिवत्सरं तज्जन्ममहादिनसमभ्यर्हणाय पूजाप्रार्थनादिसमेतमुत्सवं समारभत । व्याध्युपद्रवात् वार्षिकोत्सवः क्रि. श. १८९७ तमे वत्सरे शिवाजीजन्म-दिनं विहाय पट्टाभिषेकदिने समाचरितः । उत्सवोऽपि महावैभवेन नयनश्रवणानन्दकैरलंकारैर्भाषणैरुपदेशैश्च व्यज्जृम्भत केसरीपत्रिकाया-मुत्सवोदन्तोऽपि यथाक्रमं प्रकटीकृतः । कतिपयदिनानन्तरं द्वावाङ्ग्लेयौ केनापि दुर्वृत्तेन निहतौ । एतयोर्हत्याकारणं केसरीपत्रिकाप्रकाशित-प्रबन्ध एव इति निश्चित्य तिलकमहाशये राजद्रोहकलङ्कमारोप्य तं बबन्धुः । मुम्बईनगरप्रधानन्यायस्थानानीतः स महोदयो निर्दयेन प्राड्विवाकसमूहेनाष्टादशमासान् कारागारवासमनुभवितुमाज्ञापितो दण्डि-तश्च । लण्डन्नगरस्थकेन्द्रन्यायस्थानेऽपि श्वेतजनपरिपूरिते तस्य न्यायो न लब्धः । इमं वृत्तान्तं तिलकस्य परदेशीयसुहृदो म्याक्स्-मुल्लरादयो मध्यस्ततामवलम्ब्य महाराज्ञीविक्टोरियादेव्यै व्यजिज्ञपन् "स महाशयो महाप्राज्ञो यशस्वी न सर्वथा दण्डनार्हः" इति तां दया-मयाचन्त । सा सुचिरमालोच्य दत्तवती कृपारसं येन तिलकोऽपि बन्ध-नविमुक्तोऽभूत् । तथापि कारागारवासेन तस्य देहारोग्यं क्षीणदशाम-वाप । अतः स सिंहगडे षण्मासानतिवाहयांचक्रे शिथिलितदेहबलं पुनर्लब्धुम् । ततो मद्रपुरीं गत्वा वार्षिकराष्ट्रीयमहासभां प्रविश्य

कार्यकलापं समाप्य सिंहलद्वीपाभिमुखो ययौ ।

एवं परहितकार्योन्मुखोऽपि वेदाध्ययनविमुखो न कदापि समजायत । दशवर्षाणि आमूलाग्रं वेदानधीत्य तेषां सारांशं करतलामलकमिव संजग्राह । भूगर्भशास्त्राधारेण खगोलशास्त्रनियमैरपि श्रुतिगायकानां गृहमुत्तरध्रुवेऽभवदिति निर्णीतवान् । एतन्मध्ये परिशोधनाध्ययनविघ्ननिदानभूता काचित् दुर्घटनाऽविरासीत् । मरणशय्यामाश्रितस्तस्य सखा महाधनिकः श्रीयुतबाबामहाराजाभिधः पुण्यपत्तनसरदारस्तमाहूय स्ववित्तस्याखिलस्योत्तराधिकारिणं कृत्वा यमातिथिस्सञ्जातः । याते दिवं स महाराजे महति महोदधाविव पतितमात्मानममन्यत । व्याधिपीडितस्याधिरपि समाजगाम । सदुद्देशपूर्वकमुपाक्रमत तत्सम्बन्धक्रियाकलापं स तिलकः । किन्तु विधवा तस्य महाराजस्य दुष्टपरिजनैर्धनाशापिशाचग्रस्तैः वित्तापहरणोन्मुखैः प्रचोदिता तस्य प्रतिवादिनी भूत्वा अवर्णनीयकष्टपरम्परामुत्ससर्ज तस्मिन् । अयमनुभवोऽभूतपूर्वोऽपि प्रथमं विषोपमोऽपि परिणामेऽमृतोपमोऽभूत्; यतः ग्रहणदुर्दशाविमुक्तः क्षपाकर इव निष्कलङ्को निरायात् ।

क्रि॰ श. १९०५ तम हायनादेव तिलकस्य जीवितान्त्यघट्टः प्रारभ्यते । ततःप्रभृत्येव राजकीयरङ्गं प्रविश्य विविधदुःखान्यन्वभूत् । तस्मिन्नेव हायने लार्ड् खर्जन् नाम चक्रवर्तिप्रतिनिधिर्वङ्गदेशद्वेधाकरणमाज्ञापयामास । पुण्यभूमावस्यां पुण्यतमक्षेत्रे काशीपुरवरे

राष्ट्रीयमहासभा समावेशिता । श्रीमान् देशभक्ताग्रणीर्भारतजनसेवा-दीक्षितो गोपालकृष्णगोखले एवाध्यक्षस्थानमलंचकार । तादृशद्वेधा-करणं भारतीयप्रजापक्षविरुद्धमासीत् । प्रजाभिप्रायसूचिका राष्ट्रीय-महासभां विना न काचिदपि समितिस्समग्रेऽपि भारते बभूव । तस्यां प्रजाप्रतिनिधयो सदस्याश्चासन् । अतः स्वविरोधं शासकेभ्य आविष्कर्तुं तद्बहिष्कारमेवावलम्बितुं काश्यां राष्ट्रीयसभा निर्णयं चक्रे । अपराब्दे कलकत्तानगर्यां संचालिते कांग्रेस्महाधिवेशने स्वराज्यस्थापनाय, परदेशीयवस्तुबहिष्कारः, स्वदेशीयवस्तुपुरस्कारः, राष्ट्रीयशिक्षणारम्भः, इत्यादीनि प्रधानानि साधनानि सर्वानु-मतेनाङ्गीकृतानि । यदा क्रि. श. १९०७ तमे वर्षे पदभेकं निर्णयादस्मान्निवर्तयितुं केचिदयतन्त सदस्यास्तदा राष्ट्रीयपक्षाः सभासदस्तिलकस्य नेतृत्वे सूरत् नगरे प्रतिबन्धं प्रदर्शयामासुः । अनेन कांग्रेसव्यूहे भिन्नाभिप्रायाः सञ्जाताः । ईदृग्विधभिन्नाभि-प्रायप्रादुर्भावानन्तरं, देशस्य नानाभागेषु हिंसाकृत्यानि भयंकराणि प्रारेभिरे । केनाप्यज्ञातपुरुषेण ढाकानगराधिकारी व्यापादितः, बाम्बास्फोटनानि भारतीयराजकीयेतिहासे प्रथममाविर्भूतानि, वङ्ग-देशाधिकारिणः चन्द्रनगरनगरसभाध्यक्षस्य च प्राणाः महापायस्थितिं प्रापिताः । घोरकृत्यान्येतानि भरतखण्डस्य नानाभागेषु, श्वेताधि-कारिणाममर्षमुद्दीप्य युक्तायुक्तविवेकराहितदण्डावितरणे तान् प्रचोदया-मासुः । अनपराधिनो बहवो मान्याः पत्रिकासम्पादकाः सज्जना

वक्तारश्च दण्ड्याः कृताः बन्धनागारेषु च आरोपितराजद्रोहापराधा बहुकालं बद्धाः। एतेषु माननीयेषु बालगङ्गाधरतिलकोऽप्येकतमः। सोऽपि मुम्बईनगरे मित्रस्य परंजपस्य साहाय्यार्थमागतः सरदारगृहे राजाज्ञया निर्बद्धः ।

मुम्बईप्रधानप्राड्विवाकेनाज्ञप्ता राजभटास्तस्य गृहं, पुण्यपत्तने पत्रिकागृहं, सिंहगडे आरोग्यनिवासं च प्रविश्य परीक्षितवन्तः। तिलकमहाशये राजद्रोहमारोप्य तं न्यायास्थानमानयन् निर्दिष्टे दिवसे। नवग्रहा इव सप्त यूरोपीया द्वौ पारसीकौ न्यायासनान्यलंचक्रुस्तस्य दिष्टं निर्णीय तं सज्जनाग्रगण्यं दण्डयितुम्। सोऽपि पञ्चदिनान्यविच्छिन्नधाराभिरभिसमेतया वाग्झर्या पत्रिकास्वातन्त्र्यमुद्दिश्य तत्रस्थान् स्तम्भितान् कृत्वा चात्मानं निर्दोषमदर्शयत्। प्रोज्वलभाषणे समाप्ते, विरोधवृन्दे मूकीकृते, प्रतिवादिभयङ्करेण महापण्डिततिलकहुङ्कारेण, न्यायाचार्या अपि न्यायविरुद्धमार्गमवलम्ब्य तं निरर्थकं द्वीपान्तरं गमयित्वा षट् संवत्सरकालं कारागारे निर्बबन्धुः। क्रूरस्य हृदयं कृपा वा कथं प्रविशति; न कोऽपि वर्तते त्रिषु लोकेष्वपि तत्परिवर्तने समर्थः। द्वीपान्तरगमनात्पूर्वमेवमुद्वेगप्रेरितः प्रत्यभाषत :—

"निर्दोषः खल्वहम्। तथापि क्रूरविधिदुर्विपाकात् महान् दण्डो मयि निपातितः। यद्भाव्यं तद्भवत्येव। अत्र का वा परिदेवना? भगवानेव सर्वेषां नियामको विजानाति सत्यमत्र।

यदि मम यातनया महानुद्देशः सेत्स्यति हर्षचित्तेन तामनुभवामि" इति ।

कतिपयमित्राणि महद्धनव्ययेन तद्विमुक्तये प्रायतन्त । किन्तु विफलप्रयत्नानि बभूवुः । तेष्वेकतम आङ्ग्लदेशयात्रामपि स्वीचकार । सापि व्यर्था समजायत । यथानिर्दिष्टकालं संपूर्णमन्वभूत् कारागारवासम् । श्रीमान् तिलकः कष्टसहिष्णुतया, निःस्वार्थतया च जनप्रियोऽभूत् । सर्वे जनास्तस्य कष्टदशामुद्वीक्ष्य नयनाभ्यामश्रुवर्षं मुमुचुः, अनेके यन्त्रालयकर्मकराः, कृषीवला अपि स्वकर्माणि परित्यज्य दुःखाम्बुनिधिनिमग्नाश्चासन् । सहस्रशस्ते देशस्य नानाभागेषु अनुतापनिर्णयांश्चक्रुः । पक्षविरोधं विस्मृत्य सर्वे राजकीयपक्षविपक्षनायकाः पर्यदेवयन्त । तस्य स्वार्थत्यागं सर्वे चैकवाक्येन प्रशशंसुः ।

तिलकस्य कारागारवासेनानिरीक्षितविश्रान्तिर्लब्धा । एकाकी प्रथमं किंकर्तव्यताविमूढो न किमपि कर्तुमुत्सहते स्म । परन्तु क्रमेण क्षमयात्मनो दुःखदशां वीक्ष्य गीताध्ययनपारायणपरायणो बभूव । जनानामार्तानां गीतैव परमौषधम् । अतन्द्रितो भगवन्मुखारविन्दान्निर्गलितं गीतामकरन्दं प्रतिक्षणमास्वाद्य ब्रह्मानन्दमविन्दताचिरेणैव कालेन । गीताश्लोकान् पुनःपुनः प्रपठ्य, तेषां सुधारसं परिपीय "गीतारहस्यं" इति पुस्तकं महाराष्ट्रभाषायां पण्डितपामररञ्जकं व्यरचयत् । अद्यापि टीकाकारैर्विविधविधैर्विमृष्टमपि

तदुत्तमस्थानमेवालंकरोति । अनेके पण्डिताः क्रमेणान्यभाषास्वपि तदनूदितवन्तः ।

क्रि. श. १९१४ तमे वर्षे कारागाराद्विमोचितः श्रीबालगङ्गाधरतिलकः उपरागविमुक्तसहस्रभानुरिव भरतखण्डं प्रत्याजगाम । पुनरपि भारतस्वातन्त्र्यसमरसेनानायकस्थानमारोपितो यथापूर्वं स्वजनैः । स्वराज्यस्थापनकार्याय बद्धकङ्कणः पुनः 'मराठा' केसरी' पत्रिकाद्वयेन क्रियाकलापमारेभे । अहमद्नगरे बेलगां पुर्यां कृतानां भाषणानामाधारेण मुम्बई न्यायाधिपः पुनरपि तद्ग्रहणायायतत । परन्तु श्रेष्ठन्यायाधीशो विवेकी भूत्वा न्यायमार्गमेवाललम्बे । तदनु लक्नौ कांग्रेस् सभायां प्रधानपात्रमेव धृत्वा देशोद्धारकार्याणि सम्यक् निर्वर्तयामास ।

अथ वर्षद्वयानन्तरं भारतस्वातन्त्र्यसाधनाय देशस्थितिमाङ्ग्लजनानां पुरतः प्रस्थापयितुं इङ्ग्लेण्ड्देशं स्वमित्रैस्सह जगाम । किन्तु ब्रिटिष् शासका एतेषां प्रयत्नान् अङ्कुरदशायामेव निर्मूलयितुं तेभ्यो गमनाज्ञां नादुः । अतः सिंहलद्वीपप्रधाननगरात् कोलम्बोप्रदेशादेव स बलात्कारेण प्रत्यागमितः । स्वराज्यसाधनक्रियासंहतिभिः प्राप विशेषदेहश्रमं स तिलकः । कारागारवासेन चाविरतोद्यमेन सर्वतोमुखं तस्य देहारोग्यमवनतिमापेदे । क्रि. श.

१९२० तम वत्सरारम्भे व्याधिग्रस्तो रोगशय्यायां षण्मासपर्यन्तं यातनामनुभूय देशभक्ताग्रणीः स महात्मा बालगङ्गाधरतिलकश्चतुष्षष्टितमे वयसि स्वजनानखिलान् दुःखसागरे निधाय वीरस्वर्गमापेदे दिवि दिविजसहस्रैरभूतपूर्वं स्वागतीकृतः। दिवंगतस्यापि तस्य यशो दिगन्तविश्रुतं नामापि प्रतिपदं जनैस्सभक्त्युन्मेषमुच्चार्यते। भरतखण्डस्य प्रधाननगरेषु तत्र तत्र स्मारकमन्दिराणि निर्मितानि। तेनारब्धस्स्वातन्त्र्यसमरोऽधुना परिपक्वस्थितिं प्राप्य विजयपूर्णः शोभते।

पाश्चात्यनागरिकवेषभूषणैर्न कदाप्याकृष्टो बभूव। 'आङ्ग्लभाषया वयं सर्वेऽप्युद्धताः' इत्यनेकवारं भाषमाणोऽपि स्वदेशीयधर्माचारान्न कदापि विससर्ज नापि निनिन्द। "तद्बाह्याडम्बरानुकरणं निरर्थकम् इत्यसकृत् स्पष्टवाण्या संजगौ। महाराष्ट्रनिवासिनो जनास्तं साक्षात् देवांशसंभूतमिवाराधयामासुः जनानां कलिकलङ्क निवारणार्थमवतीर्णमस्मिन् लोके। स मितभाषी, वेषभूषणेष्वतीव सरलः दीनदरिद्राणामप्यभिगम्यः, पण्डितमाननीयो, राजविद्वद्धनिकमान्यः अद्वितीयप्रज्ञाशाली, शीलवत्सु सर्वोत्तमः सर्वेषामपि स्वजनानां स्वदेशे परदेशेऽपि पूजनीयो भूत्वा तेषां हृदयतले प्राप्ताचलप्रतिष्ठोऽभवत्। वङ्गदेशीया इव न वागाडम्बरविलसितः परन्तु कार्यतत्परो

गाम्भीर्येण मन्दं मन्दं भाषमाणोऽपि विवेचनाशक्तिपराकाष्ठतया विरोधिवृन्दमपि व्यालग्राहीव निजभाषणवाद्गीतपरवशमकरोत् । सदा प्रशान्तचित्तश्चित्तक्षोभप्रदानसमर्थेषु कष्टेष्वपि, विशालदृष्टिविमलीकृतप्रज्ञः सत्यमार्गावलम्बी, न्यायधर्मनिरतः सदा गीताभ्यासरतः सर्वेषामाचकर्ष मनांसि नयनानि च युगपत्प्रथमदर्शन एव । अतस्स 'लोकमान्यः' इति लोकैस्सम्मानितः । तस्य मूर्तिरद्यापि तनोति भारतीयानां चित्तरङ्गेषु विचित्रतरं ताण्डवम् ।

॥ इति श्रीनागराजविरचिते भारतीयदेशभक्तचरिताख्ये ॥
॥ नवीनगद्यकाव्ये श्रीबालगङ्गाधरतिलकचरितं ॥

**समाप्तम्**

---

## ॥ श्रीविवेकानन्दचरितम् ॥

सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः ।
सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥
— शङ्करः

वङ्गदेशो नाम भरतखण्डे विशालः सस्यसमृद्धिपूर्णो जनभरितश्च महान् जनपदः । तस्य प्रधाननगरी कालीघाटथवा कल्कत्तेति विश्वविख्याता विजयते । यत्र परमपावनी गङ्गानदी ससंभ्रमं, सादरं, सगौरवं, सकौतुकं, समन्दाक्षं, साकूतं, सविभ्रमं सविलासं चात्मानुरूपं, गम्भीरतमं, महोज्ज्वलं, महोदधिं, प्रियतमं भर्तारमधिगच्छति तेन सह संगच्छते च । समागमो हि तयोरपूर्वशोभां बिभ्रती दृश्यते दिविजानप्याह्वयतीव । हिमालयाज्जाता, जाम्बूनदप्रभा, जाह्नवी, जलधिसमागमे विजयते प्राप्तविस्तारा, परिवर्तितनिजस्वरूपा । सहस्रनयनैरपि तां द्रष्टुं न शक्नोति शतक्रतुः चतुर्मुखोऽपि तस्या वैभवं गातुं न समर्थः सृष्टिकर्ता, वाचस्पतिरपि तस्या गुणान्वर्णयितुं न प्रभुर्बृहस्पतिः, देवसेनानायकोऽपि तामाक्रमितुं न समर्थः षडाननः । नवीनविज्ञानविशेषपरिशोधननिपुणै-



स्वामी श्रीविवेकानन्दः

महामेधाविभिरप्यविज्ञाततद्गम्भीरैर्निर्मितश्चायोमयो महान् सेतुस्सुरनद्या गगनचुम्बितात्मीयशिरःप्रदेशो विस्मयजनको विजृम्भते प्रभूताट्टहासेन हौडाधूमशकटस्थानसन्निकर्ष एव । द्विधा विभक्ता खलु कल्कत्ता-नगरी भागीरथ्या । नौकासहस्राणि तस्या उपरि प्लवमानानि प्रत्यहं दृश्यन्ते खलु पत्तनस्यार्थिकाभिवृद्धिसूचकानि । तानि इरावतीतरङ्गिणीजलाभिवर्धितब्रह्मदेशमपि लीलया गच्छन्ति । नगर्यामस्यां तत्र तत्र मनोहराण्युद्यानानि तृणसस्यभरितानि, पुष्परेणु-समाच्छादितानि नानागन्धरसमयानि, नयनान्यागन्तुकानां समा-कर्षन्ति । हर्म्याश्शतात्परास्संदृश्यन्ते गगनगामिभिर्मेघवृन्दैस्सह स्पर्धयेव वर्धमानाः । धनाधिपापरावताराः, धननिधिसंग्रहणचतुराः चतुरालापविमोहितदीनजनाः, धनलक्ष्मीकटाक्षवशवर्तिनः, यथाशक्ति दानधर्मक्रियानिरताः धनिकाः तत्र सन्ति सहस्रसंख्याभिरेव । तस्यां गङ्गातीरानतिदूर एव पुरातनो विलसति साट्टप्राकारसंयुतः प्रतिदिनमाहूतभक्तवृन्दो वृन्दारकैरनुक्षणं गीतवैभवो भवोत्साहवर्धकोऽपि भवतापतप्तजनशान्तिप्रदानकातरः, पूजासामग्रीविक्रयवितरणोत्सुकापण-परिवृतो नीलशिलानिर्मितरम्यदेवीमूर्तिः, दीर्घशोणितजिह्वाप्रदर्शन-संत्रासितशिशुस्त्रीसमूहो महादेवालयो कालिकामहादेव्याः ।

अस्यामेव नगर्यां दत्तवंशजातो जात्या कायस्थो वावदूक-

वृत्तिमाश्रितो धीमान् कश्चन विश्वनाथो नाम वसति स्म । तस्यानुरूपा भार्या भुवनेश्वरीति विश्रुता शिवभक्ताग्रणीर्धर्मनिरता सदाचारसम्पन्ना पतिव्रता चासीत् । आधिषु सिद्धौषधिरिव, व्याधिषु सखीव, केलिषु वयस्येव, देवब्राह्मणातिथिपूजासु शिष्येव, गृहकार्येषु गृहिणीव चार्तिषु बन्धुरिव तस्य सा नानाविधसुखप्रदात्री स्वर्गसुखमदादिहैव । रामायणमहाभारतादिग्रन्थपारायणपरायणा, दीनदरिद्रजनानामाप्तबन्धुश्चासीत् । सदा व्रतनियमानुष्ठानतत्परा परमात्मध्यानासक्ता सा काशीविश्वेश्वरदर्शनातुराप्यसकृत्तत्र गन्तुमियेष । परन्तु गृहकार्यधुरंधरा साध्वीमणिः सा विघ्नशतैरभिविद्धा काशीं गन्तुं न शशाक । येन केन प्रकारेण वापि काशीविश्वेश्वरप्रीतिमधिगत्य पुत्रं प्राप्तुमसकृदैच्छत् । मूढा जना एव सर्वान्तर्यामिनं च हृदयस्थं भगवन्तमविज्ञाय तीर्थयात्रां कुर्वन्ति । इत्यवधार्य सा मनसि ध्यात्वा विश्वेश्वरं वाराणसीनगरवासिन्या स्वपितृव्यपत्न्या तस्य पूजामकारयत् । तस्या अनन्यभक्तिसंतुष्टः परमकरुणानिधिर्भगवान् विश्वनाथः स्वप्रसादरसाभिषिक्तां तामचिरेणैव चकार । एकदा कस्मिंश्चित्पुण्यदिने दिवा देवमन्दिरे तस्थौ ; निशि विचित्रं स्वप्नमेकं ददर्श । भगवान् सर्वेश्वरस्साक्षादागत्य धृत्वा शिशुरूपं स्वगर्भमविशदिवाभासयत्तस्याः । परेद्युरुत्थाय ब्रह्मा-

नन्दमवाप्य शङ्कर एव स्वसुतो भविष्यतीति निस्संदेहमवाधारयत् । तदाप्रभृत्यभवदन्तर्वत्नी शुशुभे चापूर्वकान्तिसन्दोहरञ्जितरमणीयानना-रविन्दलक्ष्मीः ।

अथ नवमे मासि मकरोन्मुखे दिवाकरे शुभग्रहवीक्षणबलिष्ठे दिने दिननाथतेजसा दीप्यमानः शिशुर्जगत्कल्याणाय जननी-तोषणाय च जन्म दधे । क्रि. श. १८६३ तमे वत्सरे जनवरी मासि द्वादशे दिने जातस्स वरसुतो मात्रा वीरेश्वर इत्याहूतोऽपि क्रमेण 'नरेन्द्र' इति नाम लेभे स्वपराक्रमेण बुद्धिबलेन च लब्धयशःप्रवाहः । अस्य पितामहो दुर्गाचरणाख्यः पूर्वे वयस्येव संसारं निस्सारं विज्ञाय विश्वनाथाभिधपुत्रजननानन्तरं वैराग्यं स्वीकृत्य ययौ देशान्तरपर्यटनपर्युत्सुकः । अस्य पिता विश्वनाथदत्तः सुसंस्कृतश्चासीत्; मातापि परमसाध्वीमणिः पुरन्ध्रीणां धुरि कीर्तनीया । तयोर्मध्ये ववृधे स बालको भाग्यवतामुत्तमः । कुलक्रमागतं वैराग्यं नाम तस्य शरीरे प्रत्यवयवं प्रवहति स्म । यदा स किमपि शठकार्यं कृत्वा रुदन्नासीत् तदा तस्य माता शिशु-शीर्षोपरि पूर्णकुम्भजलं प्रक्षिप्य शिवमन्त्रं कर्णे जपति स्म । अनेन शिशुः स्वरोदनं विहाय विहसति स्म । बाल्ये नरेन्द्रः शठगोप इव शठश्चासीत् । भगिनीजनपीडनं तस्य नित्यकर्म

बभूव । परन्तु साधुजनानथवा योगिवर्यान् यतीन् वा दृष्ट्वा सभक्त्युन्मेषं प्रणमति स्म तान् । मूकजीविषु प्रीत्यादरौ दर्शयामास ।

नरेन्द्रस्य प्राथमिकविद्याभ्यासः सम्यक् प्रारब्धः पादारविन्दयोर्मातुरेव । सा जननी श्रीमद्रामायणमहाभारतादिभारतीयपुरातनग्रन्थोद्धृतां मनोहरकथावलीं मञ्जुलरीत्या तस्य श्रावयामास । श्रीरामलक्ष्मणादीनामदीनां जीवनपद्धतिं, धर्मराजभीमसेनादीनां धैर्यसाहसादिगुणान् तस्मै कथयित्वा पुत्रस्य भविष्यज्जीवितप्रथमसोपानमारचयत् । वङ्गाङ्ग्लभाषासाहित्यद्वयपरिचयमपि तस्य स्वयं कारयामास । बाल्यादारभ्य स बालः श्रीरामचन्द्रे भक्तिमतुलांप्रादर्शयत् । तस्मिन्नेव ध्यानासक्तः कालं महान्तं यापयति स्म । स एव तस्याराध्यदेवताभूत् । विवाहविषयविमुखश्च वैराग्यदत्तासक्तिश्च क्रमेण बुद्धिविकासमविन्दताल्पे वयस्येव । प्रतिदिनं रात्रौ शयनात्पूर्वं तस्य विचित्रतरानुभवो जायते स्म । स्वभ्रुवोर्मध्ये ज्योतिर्मयी काचित्कान्तिरुद्भूय, वृद्धिं प्राप्य तमसकृत्पुलकितगात्रं तनुते स्म । प्रथमं सोऽयमनुभवः सर्वसाधारण इत्यमन्यत । परन्तु क्रमेण स्वकीय एवेति मेने । एकाग्रमनसा ध्यानाधानकर्मणि पारङ्गतो बभूव । मुग्धबोधं नाम संस्कृतव्याकरणं करतलामलकमिव पपाठ । सप्तमे वयसि जगद्विख्यातईश्वरचन्द्र-

विद्यासागरविद्याशालायां, विद्याभ्यासवृद्धिमवाप । शालायां स्वकीयाद्भुतबुद्धिशक्त्या विषयग्रहणसामर्थ्येन, तर्कविचारविमर्शविधानादिगुणैरध्यापकवर्गमखिलमाश्चर्यचकितं चकार । सहाध्यायिभिस्सह महानन्दमविन्दत । क्रीडाङ्गणेषु मनोहरविधानैश्चिक्रीड । कुपितानप्यध्यापकवर्गान् स्वचेष्टितैः संतोषयामास । स कदापि मूढाचारेषु न विश्वसिति स्म धैर्यं न कदापि त्यजति स्म च । क्रमेण वयोवृद्धिमाप्तवतस्तस्यान्या वृद्धयः सञ्जाताः । पुस्तकपठनं, वृत्तान्तपत्रिकावलोकनं, मेधाविजनाभिभाषणश्रवणं, गुरुजनै पण्डितैस्साकं विषयविमर्शीकरणं, इत्यादिभिर्निरन्तरं स नरेन्द्रो बुद्धिं वर्धयामास चात्मनः ।

अत्रान्तरे विश्वनाथदत्तः कल्कत्तानगरं विहाय रायपुरं जगाम । नावर्तत तस्मिन् पुरे काचिदपि शाला । अतस्स प्राज्ञतमेन स्वपित्रा सह विविधविवादनिरतोऽभवत् । पितुरुदात्तगुणाः, धीरस्वभावः सत्यधर्मपरता पुत्रमपि न केवलमाचकर्षुः परन्तु तस्मिन्नपूर्वपरिणामं वितेनिरे। शालाभ्यासं विनापि नरेन्द्रस्य धीर्विशाला बभूव । सोऽपि बुद्धिविकासमवाप सदा विषयग्रहणातुरश्चतुरश्च कुतूहलाविष्टचित्तभित्तिः । वर्षद्वयानन्तरं पुनः कल्कत्तां गत्वा विश्वविद्यालयपरीक्षायां प्रथमस्थानमेवापद्यत । एवमतन्द्रितस्स्वकीयपाठप्रवचनाभ्यासं सम्यगाचरन्नपि न कदापि देहपोषणविषये गतादरस्संजातः । "शरीरमाद्यं खलु धर्म-

साधनम्" इति कवीन्द्रवचनं सर्वदा स्मृतिपथे न्यवेशयत्। मृगेन्द्र इव स नरेन्द्रो व्यायामसाहसक्रियाकरणादिभिस्संवर्धितकायसौन्दर्यो नूनमजायत नरेन्द्रः। तथापि मृग इव पाटवाविष्टोऽपि, मृगेन्द्र इव निर्भयाविष्टहृदयो, गजेन्द्र इव स्थूलकायो व्यजृम्भत।

कलाशालायां व्यासङ्गनिरतः प्रथमं स नरेन्द्रस्स्वशालाध्यापकवर्यविलियं हेस्टीमहोदयमुखात् दक्षिणेश्वरवास्तव्यस्य 'श्रीरामकृष्णपरमहंसस्य सुमधुरं नाम सप्तस्वरान्तरितवीणारहस्यमिव शुश्राव। निर्दुष्टवचोभिस्तस्य परमहंसप्रभावं प्रशंसन्तं प्रधानाध्यापकं स चैकाग्रचित्तेन चानिमेषलोचनाभ्यां ददर्श, तदनन्तरमेव पुलकितमिवात्मानममन्यत। चक्रे च निश्चयं तदैव तत्र गत्वा परमहंसदिव्यदर्शनमनुभवितुम्। तस्मिन्नेव समये वङ्गदेशे महाप्रभावशालिनः केशवचन्द्रसेनस्य नामापि प्रख्यातमभूत् सर्वासु दिक्षु। सोऽपि ब्रह्मसमाजस्थापकेष्वेकतमश्च वङ्गीययुवकवृन्दस्याराध्यमूर्तिरभूत्। असकृन्नरेन्द्रस्य बुद्धिर्गृहस्थाश्रमसन्न्यासाश्रमयोरन्तरे न्यस्ता डोलायमाना न कञ्चिदपि निश्चयं प्रपेदे। प्रकृत्या स विवाहविमुखो भूत्वा मनसि चिन्तानिपीडितो महादुःखमनुभवन् कञ्चित्कालं निनाय। प्रत्यहं स्वप्नेषु चात्मानमेकत्र यथाविधि विवाहितं भार्यापुत्रसमेतं समैक्षत। अन्यत्र भिक्षापात्रपर्यवेष्टितपाणिपुटं काषायाम्बराडम्बरवेष्टितं विरागिषु

पुरस्सरं सदाशिवमिव भास्वरमपश्यत् । अनेकचिन्तापरिक्षुभित-मनास्स नरेन्द्रो यं यं योगिनं, विरागिणं, मठाधिपतिं, साधुं, सत्पुरुषं, प्रख्यातमपश्यत् तं तमप्राक्षीत् 'भगवन् किं भगवान् सर्वेश्वरो भवद्भिर्दृष्टः ? यदि दृष्टस्स् कथं वर्तते केन प्रकारेण सोऽस्माभिरपि दृश्यते' इति। तेषु न केनापि तस्य मनश्शा-न्तिदायकमुत्तरं दीयते स्म । अतो व्याकुलचित्तः किंकर्तव्यता-मूढश्चैकदा सुरेन्द्रनाथमित्राख्यस्य मित्रस्य गृहे निवसन् दक्षिणेश्वरं सस्मार । 'तत्रैव गत्वा विचिकित्सां भेत्स्यामि, तस्य महामहिम्नः श्रीरामकृष्णपरमहंसस्य पुरतः प्रश्नावलिमुत्सृज्य' इति निश्चिकाय ।

इयमस्माकं पुण्यभूमिर्भरतमाता महाप्रभावशालिनीति पुराणे-तिहासविख्याता विराजते । अनेके धर्मोद्धारकाश्चात्रैव जन्म धृत्वा लोकविख्याता बभूवुः । सा पावनतमनदीतीर्थसङ्गमपुण्यक्षेत्रगिरिवर-काननसमलङ्कृता निष्पक्षपातं निखिलजनानां जन्तूनां च पापा-पहारिणी पुण्यचरित्रा सिद्धगन्धर्वविद्याधरादिदिविषद्गीयमानवैभवा भवान्तका वर्तते । यदा यदा जगत्पापभूयिष्ठं स्यादथवा धर्म-ग्लानिर्जायते तदा तदा धर्मोद्धरणाय दुष्टदण्डनार्थं च भगवानेव विविधरूपैरवतरति कस्मिंश्चिदपि देशे तारयिष्यति च साधून् भक्तान् सज्जनांश्च । तथैवात्रापि गतशताब्दे भारतीयमहम्मदीयाङ्ग्लेय-

संस्कृतित्रयमुदभूत्परस्परसङ्घर्षणाक्रियानिमग्नम् । एतासां संस्कृतीनां सम्मिलनं हि सत्वरजस्तमसां समाहार इवाथवा त्रिवेणीसङ्गम इव पवित्रीकृत्य सम्यक् संयोज्य च जगदादर्शभूतं कर्तुं श्रीरामकृष्णो जात इति भासतेऽद्यापि ।

विप्रान्वये जातोऽपि, कृतवेदाभ्यासोऽपि, बाल्ये कृतोद्वाहोऽपि श्रीरामकृष्णो भवचक्रवर्ती भूत्वापि केनचिद्विचित्रतेरणानासक्तियोगेन नलिनीपत्रे जलबिन्दुरिव जीवन्मुक्तो बभूव । महम्मदीयबौद्ध-क्रैस्तादि विविधधर्मानधीत्य तत्तन्मतीयग्रन्थावलोकनेनाथवा मताचार्योपदेशितद्वारा चाचिरान्निर्मलदृष्ट्या ददर्श सर्वेषां धर्माणामद्वैत-भावं, भगवतश्च सर्वान्तर्यामित्वम् । सर्वे धर्मा भगवन्मूला इति विज्ञाय, ते बहिर्भिन्ना इति चाजानात् । यथा सर्वे प्रवाहाः समुद्रे समागच्छन्ति तथैव सर्वे धर्माः सर्वेश्वरे भगवति सम्मि-लन्तीति निस्संशयं बुबुधे । निजभार्यां मायेति न निनिन्द; दुःखकारिणीति न दूरीचकार परन्तु भवतारिणीति पत्रैः पुष्पैश्च तां पूजयामास । जगन्मातरमिव तामाराधयामास स धर्मात्मा । रासमणिनाम्न्या कयाचिद्धनिकसीमन्तिन्या निर्मिते देवालये भवतारिणी-देवताया अर्चको बभूव । देवीदर्शनकातरो शिलामूर्तिपादारविन्द-योरसकृत् शिरो निर्बिभेद, उन्मत्त इव प्रललाप चोच्चैः । तथापि

तस्य देवीदर्शनं न लब्धम्। अस्योन्मत्तस्य चरितं क्रमेण देशस्य नानाभागेषु प्रससार । पण्डिताः, वेदान्तिनः, आत्मविद्यानिष्णाताः, नानाधर्मरताः जनाः श्रीरामकृष्णं द्रष्टुं शतशस्सहस्रशश्च समाजग्मुः । तान् सर्वानपि मन्दहासेनैव स्वागतीकृत्य सुलभरीत्या संशयावलिमुच्छिनत्ति स्म क्षणेनैव कालेन । कांश्चित् कथाभिश्चाद्भुततराभिः, कांश्चित् सूत्रैरिव लघुतमैर्वाक्यैर्न केवलं मुग्धान् किन्तु पूर्णमनोरथान् कृत्वा प्रतिप्रेषयति स्म ।

स्मृत्वा चैनं परमहंसं नरेन्द्रोऽपि तत्र गत्वा स्वसंदेहनिवृत्तिकातरो, स्वस्थचित्तो भवामीति निर्धार्य, तथैव चक्रे । अन्तः प्रविश्य तेजोराशिं, ध्यानासक्तिक्रियार्धनिर्मीलितनेत्रं, मन्दहाससन्दीप्तमुखारविन्दं, शान्तचित्तमन्तर्मुखं, निराडम्बरं, निष्कलङ्कमविद्यादूरीकरणक्रियाबद्धकङ्कणं, जाज्वल्यमानतेजसं, जितेन्द्रियं, पण्डितोत्तमसहस्रपरिवृतं, श्रीरामकृष्णपरमहंसं हंसमिव भुवि गाढान्धकारनिर्मूलनार्थमवतीर्णं, धूर्जटिमिव साक्षात्कृतावतारं धर्मसंस्थापनार्थं, महाविष्णुमिव प्रशान्ताकारं, बुद्धमिवाहिंसातत्त्वोपदेशनिरतं, सत्यमिव मूर्तिमत्, ज्ञानमिव रूपि, धर्ममिव शरीरिणं, संस्कारमिव देहिनमद्राक्षीदनिमिषलोचनाभ्यां च तं द्राक्षारसायनमिव पपौ । दर्शनेनैव केवलमात्मानं तीर्थस्नातमिव, प्रक्षालितमिव,

अवभृथस्नातमिव, धूतपापमिव, ज्ञानार्णवाभिषिक्तमिव समुद्धृतमिवात्मानममन्यत । जन्मान्तरपुण्यकर्मणां परिपाक एव ईदृग्विधपावनाकृतिसंन्दर्शनं जनयतीति निस्संशयं मेने । 'नूनमयमेव भगवत्प्रतिनिधिः, सर्वथाद्य मया भगवान् दृष्टः' इति तस्यान्तर्वाणी तं कथयितुमारेभे । ततः श्रीपरमहंसाज्ञप्तस्तु कानिचित्पद्यानि जगौ । तेष्वेकतमस्य पादद्वयमित्थमभूत् :—

'हे चित्त गच्छ निजधाम कुतस्त्वमस्मिन्
लोके किलाटसि यथा परदेशवासः ।'

गीतान्ते परमहंसः परमादरेण नरेन्द्रपाणिं गृहीत्वा गुप्तप्रदेशं तं नीत्वा साश्रुकण्ठो गद्गदस्वरेणैवमुवाच चिरकालपरिचित इव 'किमागतोऽसि विलम्बितः, त्वां प्रतीक्षमाणोऽहमेतावन्तं कालं त्वमेव मे हृदयान्तरालनिगूढामात्मशक्तिं सम्यग्विज्ञातुमर्हसि, त्वमेव प्राचीनमहर्षेर्नारायणसखस्य नरस्यावतारो नराणां दुःखनिर्मूलनार्थं भुवमागतः कारणपुरुषः' । नरेन्द्रोऽपि वचनमेतच्छ्रुत्वा न केवलं मुग्धो बभूव किंतु चकितो भूत्वा न किमपि कर्तुमजानात् । एवं विचित्रानुभवसंजातचित्तक्षोभः कयाचिदपूर्वशक्त्या नीयमानस्स बभौ प्रभञ्जनाकृष्टः कोल इव समुद्रतरङ्गसहस्रमध्ये प्लवमानः । सहस्रभानुसदृशतेजोराशेर्महामहिम्नः परमहंसमूर्तेः पुरतो मूकमिव,

गतसंदेहमिव, प्रशान्तान्तःकरणमिव, जातविशेषशेमुषीविकासमिव, समाकृष्टमिव, मुक्तमिवात्मानममन्यत स नरेन्द्रः । गत्वा गृहं चिरकालं डोलायमानमानसोऽपि मासानन्तरं पुनरपि दक्षिणेश्वरं द्विगुणितरयेण जगाम ।

समागतं नरेन्द्रं प्रीत्यादराभ्यां सम्मान्य पार्श्वे संस्थाप्य तस्य शरीरमाद्यन्तं परामृश्य, क्षणार्धेनैव गम्भीरमुखमुद्रामभिनीय तं निश्चललोचनाभ्यां पिबन्निव, परिवर्तयन्निव, वशीकुर्वन्निव ददर्श, दक्षिणचरणं च तस्योपरि निवेशयामास स महात्मा परमहंसाग्रणीः । अनेन नरेन्द्रस्य भ्रान्तिरुद्भूता भूम्याकाशौ च परस्परस्थानान्तरं प्रापिताविव बभासे; अपि च सर्वाणि वस्तूनि भ्रमणशीलानीव ददृशिरे शिरोग्रीवचङ्क्रमणच्छलस्य तस्य । सहस्रपिशाचसंकुलमिव तस्य हृदयं साध्वसाधिष्ठितं चकाशे । भयाविष्टं तं वीक्ष्य विरागिवर्यस्स पुण्यकृतां धुरि कीर्तनीयो मृदुमधुरोक्तिभिस्सान्त्वयन् सस्मितं तस्य वक्षस्थलं कराङ्गुलिभिः परामृशत् । यथागता-मीरनेनैव कर्मणा तथैव विद्राविता निमेषेण । प्रथमद्वितीयानु-भवाभ्यामित्थं भ्रान्तश्चोन्मत्तः पुनरपि तत्र गत्वा “तस्य वशे न भवाम्यधुना” इति निर्धार्यापि तस्य स्पर्शमात्रेणैव नष्टस्मृति-रजायत । योगीन्द्रस्तु ईदृशीभिः परीक्षाभिरयमेव लोकोद्धरणार्थ-

मागतो महापुरुष इति निस्संशयं दृढीचकार चित्ते स्वकीये । शिष्योऽपि नरेन्द्रो गुरुं पर्यैक्षत । एकदा तस्य महानुभावस्य शय्यायामधस्तान्निष्कमेकं निवेशयामास गुरौ बहिर्गते केनापि कार्येणाकृष्टे । स गुरुः प्रत्यागत्य शय्यामधिश्रित्य सहसा वृश्चिक-दंशितमिवात्मानममन्यत । तदनु कारणं विचिन्वन् शय्यां परावृत्य सुवर्णनाण्यमपश्यत् । सहसा हसन् स्वपरीक्षार्थं शिष्येण प्रीति-पात्रेण नरेन्द्रेण समाचरितमेतदिति विदित्वा चात्मन्येव तं प्रशस्य प्रकाशं न किमप्युक्त्वा जहास । इत्थं क्रमेण तयोर्मैत्री गाढतरा ववृधे दृढं बद्धमूला च परस्परम् ।

अत्रान्तरे नरेन्द्रं भार्याद्वितीयं गृहस्थाश्रमस्थमातिशीघ्रमेव दृष्ट्वा मनस्तृप्तिमाप्तुमातुराणां बान्धवानां मनस्सु निराशाङ्कुरं समर्प्य विवाहविमुखः कस्यचन मित्रस्य गृहे निवसन् हृदय-मर्मभेदिनीं पितुर्मरणवार्तामश्शृणोत् । न्यायविद्यामभ्यस्यतो यौवन-पदवीमारूढस्य, परमहंसचरणारविन्दाकृष्टस्य, विवाहद्वेषिणस्तस्य शिरसि वज्रपात इवाभूत् । संसारनिखिलभारश्चैकदा पपात तस्य मूर्धनि चाननुभूतप्रापञ्चिकव्यवहारस्य । तथापि धैर्यमवलम्ब्य सुखसुलभ-मार्गं परित्यज्य दुःखपथे गन्तुं निश्चित्य ज्ञानगुरुं परमहंसं शरणं जगाम । तेनाज्ञप्तोऽप्यसकृन्महाकालीं स्वबान्धवानामन्नार्थं-

मर्थयितुं स नरेन्द्रस्तत्र गत्वा देवीं ज्ञानवैराग्यभिक्षामेव ययाचे। महादेव्याः पुरतो केवलमन्नयाञ्चा लघुचेतसां क्रियति तस्य बभासे। अतीव संतुष्टः श्रीरामकृष्णः तस्य बान्धवा न कदापि मातृ-कृपया क्षुत्पीडिता भवेयुरिति अभयहस्तं प्रससार।

षड्वर्षपर्यन्तं गुरोस्सान्निध्यं लेभे। तस्योपदेशेन योगाभ्यासं ध्यानक्रमं, एकाग्रचित्ततां, भगवत्साक्षात्कारं च सम्यगजानात्। कालक्रमेण नरेन्द्रस्य ज्ञानं परिपक्वस्थितिमापेदे। क्रि. श. १८८५ तमे वत्सरे गुरोर्गलव्याधिरुत्पन्ना। चिकित्सार्थं कल्कत्तानगरं नीतः। क्रमेण रोगोऽपि प्रबलस्सञ्जातः। गुरुरपि स्वीयान्त्य-कालं सहसा समायान्तमचिरेणैवापश्यत्। अत एव नरेन्द्रमाहूय राममन्त्रमुपदिदेश; 'सर्वेषां च योगक्षेममुद्वह' इत्यादिदेश तं प्रतिषेधप्रदर्शनातुरमपि। समाधिगमनात् त्रिचतुरेभ्यो दिवसेभ्यः पूर्वं स महायोगीन्द्रस्तु नरेन्द्रस्य चक्षुषि स्वचक्षुर्निधाय स्वीयं शक्तिसर्वस्वमपि विद्युत्प्रवाहविधानेनेव तस्मिन्निदधे। ऐश्वरं वीर्य-मुद्वहन्नग्निरिव चकाशे स नरेन्द्रः प्रज्वलन्नित्यान्तर्निविष्टमहातेजसा। दिनद्वयानन्तरं दीनसेवाधुरन्धरो विना दैन्येन व्याधिशिथिलीभूतं भौतिकं देहं क्रि. श. १८८६ तमे वत्सरे आगस्ट् मासि १६ दिने विससर्ज पश्यत्सु शिष्यसहस्रेषु बाष्पपूर्णलोचनेषु समग्रं

लोकं शोकसागरे निधाय । शिष्यवर्गस्तु जननीजनकबन्धुदैवभूतं श्रीरामकृष्णपरमहंसं दिवंगतमुद्वीक्ष्योच्चैर्व्यलपत् । परेद्यवि ते सर्वे श्रीरामकृष्णकलेबरं गन्धमाल्यादिभिस्समलंकृत्य स्कन्धेषु निवेश्य जयघोषैर्नगरं परितो गत्वा चान्त्यसंस्कारान् यथाविधि निर्वर्तयामासुः ।

महासमाधेरनन्तरं गुरोर्निखिलः कार्यभारः नरेन्द्रस्य शिरसि चैकदैव पपात । गुरुचरणाश्रिता तरुणशिष्यालिरनन्ताभूत्; संसारदुःखदवानलदग्धहृदया दूयमानमानसा मानवास्सहस्रशो महागुरुमहावृक्षं विश्रमार्थमाश्रयन्ते स्म; प्रत्यहं भारतदेशनानाभागेभ्यः पण्डिताः, वेदान्तिनश्चाधिकारिणो गुरुदर्शनार्थं, संदेहनिवृत्यर्थं, ब्रह्मज्ञानवादविवादार्थं च देवालयमिव तन्निकटमागच्छन्ति स्म । सर्वेषाममीषां समाश्वासनक्रियासर्वस्वमस्य नवयौवनपदमारूढस्य नरेन्द्रस्य भुजयोर्निविष्टम् । मुक्तिवधूरेव तस्य रूपलावण्यमोहिता हितकांक्षिणी सामान्यकन्यां सपत्नीमिव दूरीकृत्य स्वयमेवागता कान्तिपूर्णयोर्बाह्वोरन्यैरननुभूतं गाढालिङ्गनमन्वभूत् विजयाचिह्नाङ्कितमुखारविन्दश्रीरिव । अस्याः प्रथमसमागमं, संप्राप्तमहानन्दो लब्धमनश्शान्तिः समासादितगुरुकृपः पितृभ्यां दत्तं नाम विसृज्य स्वक्रियानुरूपमन्वर्थमर्थगर्भितं विवेकानन्द इति नवीनं नाम जग्राह ।

ततःप्रभृति निरन्तरं गुरुवचनामृतं देशविदेशेषु मानवजातिषु प्रसार्य चात्मानं कृतकृत्यं कर्तुं बद्धदीक्षो बभूव भारतीयधर्मसारमपि परकीयैः पूजनीयस्थानं गमयित्वा ।

गृहीतसन्यासस्य गृहस्थाश्रमस्वीकारयोग्ये वयसि श्रीरामकृष्ण-परमभक्तस्य विवेकानन्दस्य विविधदुःखानि प्रादुर्भूतानि तेष्वेकतमस्तु आहाराभावः । तारुण्यप्रथमसोपाननिवेशितपदोऽपि विवेकानन्दो गुरुकृपया न केवलं तरुणसन्यासिनां परन्तु वृद्धानामपि तत्त्व-मार्गदर्शी बभूव । स एकदा कथयामास चेत्थं शिष्याणां पुरः "वयं सर्वे श्रीरामकृष्णजीवितमादर्शमिव कृत्वा विसृज्यान्तःकलहं लोके जीविष्यामः । जगन्मायामयमिति विज्ञाय मोहान्धकारे न पतिष्यामः । भगवत्साक्षात्कार एवास्माभिः सदा ध्येयः । अय-मेव नो मनोरथः क्षिप्रं येन केनापि मार्गेण साधनीयः" इति । विवेकानन्दादिश्रीरामकृष्णवीरशिष्याणां सर्वेषां भूषणार्थं काषायाम्बरं कौपीनं च, शयनार्थं कटः, भक्षणार्थं भिक्षावृत्त्यधिगतश्चाहारश्चा-थवोपवासः, देवभजनार्थं वीणा, ध्यानसाधनार्थं भित्तिग्रथिता साधु-जनचित्रावलिः । क्रि. श. १८८७ तम वत्सरादारभ्य षड्वर्ष-पर्यन्तं शिष्यैस्सह समग्रे भरतखण्डे प्रयागादिपुण्यक्षेत्रदर्शनार्थं, स्वामी श्रीविवेकानन्दस्तीर्थयात्रानिरतो बभूव ।

वाराणसीं गत्वा भागीरथ्यां स्नात्वा, विश्वेश्वरं च दृष्ट्वा बहून् महाविदुषः संदृश्य तैस्सह चर्चानिरतः स्वकीयसंदेहान् निर्वर्तयामास । तदनन्तरमाग्रां बृन्दावनं च गत्वा भारतीय-सांस्कारिकजयस्तम्भानद्राक्षीत् । गच्छन् मार्गे नूतनशिष्यान् लेभे शनैः सहस्रैश्च । पश्चात् हृषीकेशं गत्वा गङ्गाजलपातमधुरनिनाद-पूरितकर्णविवरश्च प्रशान्तान्तःकरणः कानिचिद्दिनानि निनाय । व्याधिपीडितं शिष्यमेकं तज्जन्मपुरं निनीषुः स्वेच्छाविरुद्धमपि हृषीकेशं तत्याज । ततः कल्कत्तानगरादागतमाह्वानमभिमान्य तत्र जगाम; किन्तु तत्र वर्षमेकमुषित्वापि न लेभे चिरकांक्षितं चित्तस्वास्थ्यम् । अतः पुनस्तीर्थयात्रां स्वीकृत्य काशीं जिगमिषुर्व्याधिपीडितं योगानन्दं प्रयागवासिनं श्रुत्वा तत्रैव ययौ तत्सेवाद्दबद्धकङ्कणः । ततो रोगग्रस्तस्य वाराणसीवासस्याभेदानन्दस्य सेवां विकीर्षुस्तत्र जगाम । श्रीरामकृष्णस्य गृहस्थाश्रमभक्ताग्रगण्यस्य बलरामबाबुनामाङ्कितस्य मरणवार्तां श्रुत्वातीव शोकाविष्टो पुनः कल्कत्तां प्रतस्थे । ईदृग्विधानैः सन्यासिनां धुरि स्थितोऽपि दुःखदग्धानां सर्वेषां साहाय्यं कुर्वन् स्वामी विवेकानन्दो दयार्द्रहृदयस्सर्वैराश्चर्यचकितदृष्टिभिर्वीक्षितः ।

ततो हिमालयमुमालयं लयवर्जितं जितमन्मथस्य महेश्वरस्य-तपस्सिद्धिदं, महर्षिवासयोग्यं, धातुवल्लरीभिरलंकृतं, भारतवर्षभूषणप्रायं,

जगदाश्चर्यभूतं, महोन्नतं कविभिस्समीडितं, पृथिव्या मानदण्ड इति विख्यातं, शैलराजं गन्तुं मनश्चक्रे । भारतीयनगरेषु सौन्दर्य-केन्द्रमिति प्रख्यातं श्रीनगरं काश्मीरदेशप्रधानपत्तनमभिपेदे । ततः श्रीअखण्डानन्दस्य देहारोग्यपरीक्षार्थं मीरत्नगरं प्रस्थितः । तत्र कानिचिद्दिनान्युषित्वा दिल्लीं गत्वा तदनन्तरमाल्वारसंस्थानमवाप । मार्गे गच्छन् कस्यचन वङ्गदेशीयस्य साहाय्येन निजावासयोग्यं प्रदेशमाप्तवान् महातेजस्वी स्वामी विवेकानन्दः पश्चात् गुरु-धर्मोपदेशं जनेषु कर्तुं यथाक्रममारेभे । नानाधर्माश्रिता जनाः, महम्मदीयाः, क्रैस्तमतीयाः, जैना बौद्धाश्च बहुसंख्याभिः स्वामिनं द्रष्टुमागच्छन्ति स्म । केचित् केवलं तस्य तेजोराशिना मुमुक्षुः सोऽपि चायस्कान्त इवायःकणान् जनानाकर्षति स्म । दिने दिने जनसंख्या वृद्धिमापेदे । अतः सर्वजनसौकर्यार्थं पण्डितशम्भुनाथो नाम कश्चन स्वामिभक्तस्तं स्वगृहं निनाय यत्र सर्वे जनाः समागत्य तस्य दर्शनेन पवित्रीकृताः स्वसंदेहसंदोहान् विच्छिन्दन्ति स्म । लब्धविस्तारा तस्य शरदभ्रशुभ्रा कीर्तिर्महाराजसचिववर्यकर्णान्तिकमपि जगाम यथाकालम् ।

पाश्चात्यबहिराडम्बरविमोहितान्तःकरणो मङ्गलसिंहो नाम संस्थानाधीश्वरः श्रुत्वा चाङ्गलविद्यापरिणतमागतं साधुवरेण्यं विवेकानन्दं

तस्य संदर्शनार्थं सचिवोत्तममन्दिरं ययौ । महाराजस्वामिनोस्तत्रत्य-जनत्रासकारणमपि रसभरितं संभाषणं पश्यत्सु सर्वेषु जनेषु प्रचलितम् तदीदृग्विधमभूत् । महाराज :-- 'स्वामिन्, मूर्तिपूजायां नैवास्ति मे विश्वासः ; अहं लोहं, वृक्षं, पाषाणं वापि न पूजयामि' इति ।

विवेकानन्दस्तु श्रुत्वैतन्न किंचिदप्युक्त्वा भित्तिस्थितं महाराजचित्रं ददर्श । तद्गृहीत्वा सचिववरेण्यः स्वामिनः करे निवेशयामास । तत्रस्थान् सर्वान् जनानुद्दिश्यैवमुवाच स धीमतामुत्तमः -

'सर्वे यूयं चित्रे निष्ठीवत' इत्यादिदेश । एतदाकर्ण्य सर्वे भयचकितास्समजायन्त चित्रार्पितारम्भा इव मूका इव च व्यतिष्ठन्त । सचिवः सम्भ्रान्तो भूत्वा तथा न वक्तव्यमिति सूचयामास स्वामिने । परन्तु हसन्मुखारविन्दः स्वामी विवेकानन्दस्ततो विस्तरेणैव जगाद :--

किं सर्वे यूयं भयचकिताः ? । इदं चित्रं केवलं पत्रमेव तन्मलिनं कृत्वा किं महाराजं मलिनयेत । अस्मिन् चित्रे महाराजस्सशरीरो न विद्यते । युष्माकमत्र महाराजभावना वर्तते । अतो भवन्तः सर्वे चित्रं पवित्रं मन्यन्ते । 'यादृशी भावना यत्र सिद्धिर्भवति तादृशी' इति श्रुतमेव वाक्यं भवद्भिः । तथैव

मूर्तिपूजापि भगवत्स्मरणमस्माकं कारयति । अतस्सर्वैस्सा क्रियते करणीया च ध्यानसाधनार्थम् । राजाननन्तरमभिमुखीकृत्य द्विगुणीकृतमन्दहासश्चोवाच :–

'राजन्, चित्रेऽस्मिन् भवत्प्रतिबिम्बमात्रसहिते सर्वोऽप्यधिकारिवर्गस्तत्र भवन्तमेव संभाव्य तन्मलिनयितुं नेच्छति । तद्वदेव सर्वे जनाः स्वेच्छानुसारं लोहे वा पाषाणे वा विग्रहे वा भगवन्तमभिपूज्य कृतार्था भवन्ति । अत्र काचिन्निन्दा न कार्या; मूर्तिपूजा चैकाग्रचित्ततां सर्वथा साधयति' इति ।

अस्योपदेशस्य परिणामो महत्तरः प्रादुरभूत् महाराजे । तत्क्षण एवाञ्जलिं शिरसि बद्ध्वा साश्रुकण्ठस्स विवेकानन्दमेवं प्रत्यभाणीत् :– 'स्वामिन्, धन्योऽस्मि भवद्दर्शनेन । कृतः खलु प्रायश्चित्तो मम दुरहंकारस्य । ममाज्ञानान्धकारो विद्रावितो भवतस्तेजसां किरणसहस्रैः क्षमस्व मां महापराधिनम्' इति ।

अयमपि महोपदेशः कृतः स्वामिना ज्ञानमार्गप्रणेत्रा तरुणानुद्दिश्य स्वद्दर्शनार्थमागतान् "संस्कृतं नाम दैवी वाक्" । तस्यामेव भाषायां रत्नाकरगर्भे रत्नावलिरिव भारतीयपुरातनसंस्कृतिर्निगूढा वर्तते । सा भाषा सर्वासां भाषाणां मातृप्राया सर्वैस्सर्वविधानैः प्रयत्नतोऽप्यभ्यसनीया । पाश्चात्यसाहित्यमपि ज्ञानविज्ञानवृद्ध्यर्थं देशो

द्धरणार्थं च सम्यगतन्द्रितमध्येतव्यम् । भारतीयैरेव भारतेतिहासः प्रकाशयितव्यः विश्वस्य सर्वेषु भागेषु भारतीयसंस्कृतिप्रदीपो नेतव्यो भारतीयै राष्ट्रस्वातन्त्र्यक्रियाबद्धकङ्कणैः" इति ।

ततस्स महोदयः क्रमेण भरतखण्डे बहून् देशान् गत्वा सर्वधर्मान् सम्मान्य, जातिभेदविरहितया दृष्ट्या सर्वान् जनान् प्रीतिविश्वासाभ्यां परवशीकृत्य श्रीरामकृष्णपरमहंसादधिगतं तत्वोपदेशं सत्यभूत्यः परमादरेण प्रसारयामास । आज्मीरं चाबुगिरीन्द्रमुद्वीक्ष्याहमदाबादनगरं गत्वा तत्रापि कानिचिदुषित्वा दिनानि पुण्यपत्तनमभिप्रतस्थे एव बालगङ्गाधरतिलकातिथिश्च कश्चित्कालं बभूव । पश्चात् कल्याणपुरीं (बेङ्गलूरु) गत्वा श्रीमच्छिरशेषाद्रि-अय्यरादिभिः सचिवोत्तमैस्सह वेदान्तविचारान् विमृश्य महीशूर-महाराज श्रीचामराजनरेन्द्रेणापि दीर्घचर्चारम्भेषु निरतो बभूव । सत्यमेव तस्य परमं दैवतमभूत् भुवनत्रयमपि स्वदेशमित्यङ्गीचकार स महानुभावः तत्वजिज्ञासुः । तदनु दक्षिणभारतयात्रामुररीकृत्य रामेश्वरं कन्याकुमारीं च यथेच्छमुद्वीक्ष्य मद्रपुरीं न्यवर्तत ।

मद्रपुर्यामेव स्वामिनो जीवितमहत्कार्यस्य प्रथमाङ्कुरः प्राक्षिप्तः । कोटिशस्तत्र नानामतीया जनास्तस्य शिष्या बभूवुस्तेनैव लब्धज्ञानोपदेशा बद्धदीक्षाश्च । दर्शनशास्त्रपारंगता भारतवर्षनानाभागेभ्यः

श्रीमान् वि. सुब्रह्मण्यय्यरित्यादयः प्रख्यातपुरुषाः स्वामिनो दर्शनार्थं चर्चार्थं च समागच्छन्ति स्म केवलं मुग्धा इव । अत्रान्तरे पाश्चात्य-संस्कृतिप्रधानक्षेत्रभूते चामेरिकाखण्डे सर्वधर्मसम्मेलनं प्रचलिष्यतीति प्रकटितमभूत् । तत्र गत्वा भारतीयदिव्यसंस्कृतिप्रचारकर्म विस्तारयितुं बलवती स्पृहा समजनि । इमां विज्ञाय मद्रपुरीभक्तवृन्दमचिरेणैव कालेन धनसंग्रहं चक्रे । स्वामी श्रीविवेकानन्दः पुनरेवमचिन्तयत् :- 'ऐहिक-सुखाकृष्टस्य सदामुष्मिकविमुखस्य पाश्चात्यजनस्य वेदान्तविद्योपदेशेन कथं वा प्रयोजनं भवति' । यदा यदा चेत्थमचिन्तयत् तदा तदा तत्र गमनबुद्धिरेव बलीयसी जायते स्म । कतिपयदिनानन्तरं स्वप्ने परम-हंसेनाज्ञप्तः 'परदेशान् गत्वा भारतप्रतिनिधिरिव भारतीयपुरातनसंस्कृति-ज्योतिः प्रकाशयिष्ये' इति निर्धारं चकार । ततोऽत्यल्पेनैव कालेन सर्वे शिष्याः भक्ताश्च धनसंग्रहकार्ये निरता दिवानिशं विना श्रममयतन्त । तदनु परमहंसपतिव्रतायाः श्रीशारदादेव्या अनुज्ञामाशिषं च प्रतिगृह्य सकलैर्मित्रभक्ताशिष्यवृन्दैस्साधं मुम्बईनगरं क्षिप्रेणैव कालेन जगाम । क्रि. श. १८९३ तमे वर्षे मे मास ३१ तमे दिने सर्वानुमतेन मुम्बई-नगरे समुद्रतीरमासाद्य परदेशगमनसज्जीभूतां नावमध्यारुरोह कुर्वत्सु सर्वेषु जनेषु गगनचुम्बिनं विजयघोषमभूतपूर्वम् । नौकोपरि चिरं स्थित्वा पुण्यभूमिं भारतवर्षं साश्रुकण्ठश्चोद्वीक्ष्य गुरुमूर्तिं हृदयतले सस्मार स

महोदयो विवेकानन्दः ।

राजहंसीव परमहंसप्रधानशिष्यहंसराजाधिष्ठिता नौः पारावारोपरि करिकरोपमवीचीसहस्रभेदिनी रयाच्चलन्ती, धूमोद्गिरन्ती, भ्रमन्तीः चित्रविचित्रतरगत्या, लङ्काद्वीपमभितो गत्वा, सिंहपुरं प्राप्य चीना जपानित्यादि देशान् तीर्त्वा भूगोलपश्चिमार्धं मासद्वयानन्तरं सुरक्षितं अमेरिकाखण्डं प्रपेदे । मार्गे स विरागिषु पुरस्सरः स्वामी विवेकानन्दः तत्र तत्र हिन्दूदेशविशेषचिह्नानि देवनागरीलिपिग्रथितानि पत्राणि च दृष्ट्वा महानन्दमापेदे । उत्तरामेरिकाखण्डतीरमासाद्य ततो धूमशकटमास्थाय चिकागो महापत्तनं प्राप्तः । महाविशालं जननिबिडं, नवीनयानसंचारजनितबधिरीकृतकर्णविवरं, गगनगामिमहापणतुङ्गाग्रराञ्जितं, हर्म्यपङ्क्तिविराजितवीथिकायुतसहितं, चिकागो नगरं दृष्ट्वा क्षणं संभ्रान्तो बभूव स विवेकानन्दोऽपि प्रथमदर्शनेनैव । अपरिचितपरदेशे कष्टपरम्परानुभवेन ज्ञातसम्मेलनविलम्बस्य तस्य धनमपि क्रमेण क्षीणं बभूव । चिकागो नगरं हित्वा बास्टन्नित्याह्वयमपरं प्रदेशं सुलभतरजीवनोपायसम्पादनार्थं ययौ । तत्र कस्याश्चिद्वृद्धनार्याः साहाय्येन हार्वार्ड् विश्वविद्यालयीय यवनभाषाप्राध्यापकस्य रैट् नाम्नो महाशयस्य परिचयः संजातः । सोऽपि विवेकानन्दविवेकेन तेजसा चातीव संतुष्टस्तं सर्वधर्मसम्मेलनप्रतिनिधीकरणाय तदधिकारिभ्यो लिलेख पत्रं स्वामिनं

च चिकागोनगरगमनोन्मुखं चक्रे । रैट्महाशयप्रदत्तं पत्रं यत्र कुत्रापि विनष्टम् । चिकागो धूमशकटस्थानमागत्य पत्रं प्रयत्नेनापि न लब्ध्वा तत्रैव कस्याश्चित्पेटिकायाश्चोपरि बहुश्रान्तः क्षुद्बाधापरिम्लानमुखारविन्दो न किञ्चिदपि कर्तुं विज्ञाय सुष्वाप । चिकागोनगरे भिक्षावृत्तिमधिश्रितस्य तस्य न कोऽपि किञ्चिद्ददौ । प्रातरुत्थाय पिपासायासपरिपीडितो रथ्यापार्श्वे निषसाद । कंचित्कालानन्तरं काचिदङ्गना लावण्यवती दयार्द्रहृदया तस्य पुरःस्थितान्मन्दिराद्बहिरागत्य सोपचारमनुयुज्य सर्वधर्मसम्मेलनप्रतिनिधिरिति तं विदित्वा स्वगृहं नीत्वा यथोचितमातिथ्यं सादरं तस्मै समर्पयामास । अचिरादेव तयोर्मैत्री गाढा सञ्जाता । तस्याः पतिः शिशवश्च तस्याप्तमित्राण्यजायन्त । सैव श्रीमती हेल् नाम्नी भाग्यवती सकलसौकर्याणि सुलभरीत्या चक्रे ।

सर्वधर्मसम्मेलनं नाम महावैभवेन निर्दिष्टदिवसे यथाक्रमं समारब्धम् । अनेके प्रतिनिधयो भूगोलस्थविविधदेशेभ्यः समागताः । तेषु भारतदेशादपि चेतरे महानुभावाः, ब्रह्मसमाजप्रातीनिधी श्रीप्रतापचन्द्रमजुंदारनगरकरौ, बौद्धधर्मप्रतिपादनार्थमाङ्गरीकधर्मपालः, जैनधर्मस्थापनार्थं गान्धीमहोदयः, ब्रह्मज्ञानसमाजमादर्शयितुं चक्रवर्ती, भारतीयस्वातन्त्र्यसंग्रामारम्भहेतुर्महामेधाविनी डाक्टर् अन्नवसन्ताम्बाख्या काचिच्छ्वेताङ्गना च समाजग्मुः । प्रापाश्चिकाखिलधर्मसारानेनेके प्रतिनिधयः

क्रमेण भाषणरूपेण प्रदर्शयामासुः । सम्मेलनकल्याणमण्डपे सरस्वती साक्षाज्जिह्वातलेष्वेतेषां वीणामिव वादयन्ती ददृशे साट्टहासाटोपमुखरीकृतसभाभित्तिः । तथापि विवेकानन्दमुखारविन्दात् विचारपरिप्लुता, गम्भीरपदोल्लसिता, सितांशुकावृता सरस्वती सशरीरा निर्गतेव चकाशे सभामन्दिरे,श्रूयमानेषु घ्राणतलसमर्पिततर्जन्यङ्गुलीषु,चाभूतपूर्वस्वागतप्रदानव्याजेनोच्चैः करताडनं कुर्वत्सु । भाषणसारांशश्चेदृशोऽभूत् :—

'भारतीयसंस्कृतिः पुरातनी शाश्वती महोन्नता च वर्तते । सत्यमेव मे प्रत्यक्षं दैवम् । स्वदेशो भुवनत्रयम् । सर्वे पुरुषाः स्त्रियश्च मे भ्रातरो वा भगिन्यः । विश्वधर्मपरिशीलननिरतोऽहं सर्वधर्मावलम्बी । सर्वे धर्माश्चैकमेव भगवन्तमाराधयन्ति । स भगवान् व्याजान्तरैर्नानारूपाण्यवलम्बते । भगवद्गीतोपदेशनिदर्शनं खल्वेतत्सर्वधर्मसम्मेलनम् । परस्परासूयाहिंसाजातिभेदादयः केवलं मानवदुष्कर्मदुराचारस्वार्थसाधनहेतवः' । इत्यादि प्रस्ताव्य श्रीमत्परमहंसपरिव्राजकाचार्य श्रीशङ्कराचार्यप्रतिपादितमद्वैतसारसर्वस्वं श्रीरामकृष्णपरमहंसानुष्ठितं निरर्गलया स्फूर्त्या सभ्यानां पण्डितानामुद्दामविदुषां पुरतस्समावर्जयत् धन्वन्तरिरिव सुधामयं कुम्भं सुधास्वादनातुराणां सुराणां पुरः पुरा । तन्माधुर्यं भाषणमयमननुभूतं कर्णपुटैर्निपीय स्वर्गीयानन्दमविन्दत सभासदस्यवर्गः । अनेन भाषणेनैव स्वामिनः कीर्तिनामनी अमेरिकाखण्डीयसमस्तभागानपि

ध्यानिशातेऽचिरेणैव कालेन । पत्रिकासु प्रधानलेखनानि ददृशिरे स्वामिनश्चित्रसहितानि । क्रमेण तत्र तत्र भाषणानि समुज्ज्वलानि प्रतिदिनं विस्तृतान्यभवन् । येन केनापि व्याजेन तद्भाषणश्रवणार्थमागच्छन्ति स्म जनाश्शतशस्सहस्रशः । भारतवर्षे क्रैस्तमतीयैस्समारब्धां परिवर्तनक्रियां विना भीत्या खण्डयामास । विस्पष्टया वाण्या अमेरिकाखण्डीयश्वेतजनानां धनमद्रान्धतामवाक्षिपत् । भारतीयप्राचीनसंस्कृतिज्ञानं तेषामुपदिदेशाहर्निशं यतमानस्स महोदयः परदेशेऽपि स्वदेशकीर्तिं विस्तारयितुम् । दृष्ट्वा तत्र श्वेतजनानां धनबाहुल्यं सस्मार स साश्रुकण्ठः स्वदेशीयजनानां दारिद्र्यदशाम् । करुणारसार्द्रपत्राणि भारतवर्षशिष्यान् प्रति प्रत्यहं प्रेषयति स्म हृदयान्तरालवेदनां सोढुमप्रभुः । "भारतवर्षदेशोद्धारक्रिया खलु भारतीयैरेव मातृभक्तिनिरतैस्सदा कर्तव्या यदि भारतवर्षमपि प्रपञ्चराष्ट्रमण्डले गण्यस्थानं नेतव्यम्" । इत्यादि पत्रमुखेन स्वाभिप्रायं विशदीचकार स महात्मा स्वष्टवाक्येषु । एकैकमपि पत्रं गहनविषयविमर्शात्मकं च स्वानुभवविवरणशीलं च बभूव । बहुसहस्रपत्राणि विलिखितानि तेनातन्द्रितक्रियाकरणपटुना महामेधाविना स्वामिना विवेकानन्देन । तानि सर्वाण्यद्यापि पुस्तकरूपेण प्रकटीकृतानि वर्तन्ते ।

स्वामी विवेकानन्द अमेरिकाखण्डे पण्डितोत्तमान् वेदान्तविशारदान् महाप्रभावशालिनश्च राबर्ट् इङ्गर्सालिंस्यादीनपि दृष्ट्वा तैस्सह लीलया कटुतरविषयचर्चानिरतो भूत्वा तेषामप्यादरणीयो न केवलं स्वयमभवत् परन्तु भारतवर्षमपि पूजनीयस्थानं निनाय । तदा पाश्चात्य-

देशेषु वर्णविद्वेषो नाम करालस्वरूपं धृत्वा प्रलयताण्डवमिव कुर्वन्नासीत् । श्वेतमानवास्सर्वे नीग्रोजनान् नीलवर्णान् यत्र यत्र ददृशुस्तत्र तत्रैव तान् रथ्यास्वेव मुक्तप्राणान् रज्जुभिरेव कुर्वन्तो बभूवुः । स्वामिनमपि ते नीग्रोजनोऽयमित्यनेके श्वेतजना दुःखपरम्पराभिर्हिंसयामासुः । तथापि क्षमागुणेन सहितो नीग्रोजनैरेव मिलित्वा प्रेम्णा तेषां कष्टनिवारणार्थमयतत । अनेकवारं स्वोपन्यासेषु वेदान्ततत्वनिरूपेण सह सामाजिकनैर्मल्यमुद्दिश्यापि विशदीचकार स धर्मात्मा । क्रैस्तमतीयाः साधवः केचन तस्य महानुभावस्य जन्तुषु समदर्शित्वं सहिष्णुतां, क्षमाप्रेमसौहार्दादिगुणगणमुद्वीक्ष्य तं पुनरागतं क्रिस्तप्रभुमाहुः । क्रमेण डाक्टर् ल्वयि जेन्स् महोदयस्याभ्यर्थनानुसारं वेदान्तोपदेशार्थं वर्गानुदघाटयत् । तत्र शिष्याः सहस्रशस्समागत्य स्वामिनो मुखारविन्दान्निस्सृतं विवेकमकरन्दं भ्रमरा इव सानन्दं पपुः । अनेकाः स्त्रियो बहवः पुरुषाश्च पाश्चात्या मन्त्रमुग्धा इव श्रीविवेकानन्दपरमानन्दाशिष्या भूत्वा स्वनामानि परित्यज्य, अभयानन्द, कृपानन्देत्यादि नूतनाङ्कितान्यानन्दान्तानि संगृह्य ब्रह्मानन्दमेव लेभिरे स्वामिनश्च बभूवुः । जगद्गुरुशिष्यवर्ग इव तस्यापि भक्तवर्गस्स्वीकृतसन्यासः स्त्रीपुमानित्यभेदेन ववृधे दिने दिने । इत्थमखण्डमेमरिकाखण्डमपि परिवर्त्य कोटिशः शिष्यान् लब्ध्वा, समेत्य परां कोटिमानन्दस्य, तेषु निविष्टोपदेशक्रियाभारश्च भारतीयधर्मसंस्कृतिज्योतिः यूरोप्खण्डेऽपि प्रकाशयितुं प्रथममिङ्ग्लेण्ड्द्वीपमगच्छत् ।

गच्छन् मार्गे जगत्प्रख्यातकलासौन्दर्यकेन्द्रं प्यारिस्नगरं दृष्ट्वा दृष्टिसंतुष्टिमवाप्य, स्वाममतं प्रतीक्षमाणशिष्यवृन्दाध्युषितमिङ्ग्लेण्ड्द्वीपं

प्राप। मिस्. मार्गरेट् नोबेल्, मिस्. मुल्लरित्यादिभिः शिष्याभिर्दत्त-स्वागतो भारतीयसंस्कृतिवेदान्तधर्मप्रचारकार्यमारभत यथाक्रमम्। मास-त्रयानन्तरं, पुनरमेरिकाखण्डेऽपूर्ण कार्यं पूरयितुं गत्वा 'न्यूयार्क् वेदान्त-सङ्घं' संस्थाप्य क्रि. श. १८९६ तमे वत्सरे एप्रिल् मासि ब्रिटिष् द्वीपं प्रत्याजगाम। ततो महामहिमानं भारतीयसंस्कृतिप्रद्योतनार्थं समर्पित-जीवनसर्वस्वं, संस्कृतभाषानिष्णातं, महर्षिसदृशं, माक्स्मुल्लर् महाशयं संदृश्य परमानन्दमविन्दत विवेकानन्दः। अत्रान्तरे निरन्तरपरिश्रमेण जातायासस्य तस्य महोदयस्य शरीरानारोग्यमभिजातम्। अपि च भारतजननीविरहसंतप्तः पुनस्तद्वीक्षणकातरस्तस्मिन्नेव वत्सरे दिसम्बरमासि १६ दिने प्रस्थितो भारतदेशं प्रति।

पुनरागतं स्वामिनं जयशालिनं सर्वे जना लक्षशः कोटिशश्च समागत्य स्वागतं ददुस्तस्मै चानन्दाश्रुपरिप्लुतलोचनाः। कृतस्वागत-श्चाभिनन्द्य शिरःकम्पनेन तेषामुत्साहं,ताननतन्द्रितकार्यकरणाय सदा प्रेरयामास। तस्योपदेशसारांशश्चेदृशो वर्तते :—

'एकमेवाद्वितीयं ब्रह्म। सर्वजन्तूनां हृदयान्तराले भगवान् सर्व-शरण्यो निवसति। तेन विना तृणमपि न चलति। धर्मा भिन्ना अपि सर्वेषां धर्माणां सत्यमेवाधारस्तम्भः। सत्यं परित्यज्य न कोऽपि मानवो वृद्धिमेति। मानव एव स्वाधःपतनाय हेतुर्भवति। मूर्खास्ते नाम ये जातिमताचारादिबहिराडम्बरदत्तप्राधान्या न जानन्ति हृदयान्तर्निवासिनं भगवन्तम्। सर्वेषु जन्तुषु भेदाभावेन भ्रातृभावो निधेयः। परस्परप्रेम वर्धनीयं सर्वथा। वर्णजातिविद्वेषो दूरीकरणीयः सदा सद्भिर्भूतिमिच्छद्भिः।

सन्तोषजननमेवेश्वरपूजनम्' ।

तदनु कल्कत्तानगरं गत्वा तत्र चालंवसाराख्यायां रथ्यायां श्रीरामकृष्णपरमहंसाश्रमे गुरूपदेशविस्तारक्रियानिमग्नोऽभूत् । बहवो जनास्तत्रागत्य विविधविषयजिज्ञासवोऽभवन् । क्रि. श. १८९७ तमे वत्सरे मे मासि सर्वानाहूय भक्तान् शिष्यांश्च दीनजनसेवार्थमज्ञाननिवारणार्थं मानवसमूहदुःखशमनार्थं, परमहंसगुरुरामकृष्णप्रीत्यर्थं च श्रीरामकृष्णाश्रमं स्थापयामास । अद्यापि चाश्रमस्य कीर्तिर्न केवलं भरतवर्षे किन्तु सर्वस्मिन्नपि जगति प्रख्याता वर्धते । तस्य शाखाश्चोत्साहशालिभिः शिष्यैः प्रागेव प्रमुखनगरेषूद्घाटिता बभूवुरविलम्बेनैव । अमेरिकादागतां श्रीमती मार्गरेट्नोबेल्नाम्नीं रमणीं शिष्यामिव स्वीकृत्य भगिनी निवेदितेति तामाहूय भारतीयकन्याजनरक्षणपोषणशिक्षणादिक्रियासु नियोजयामास ।

इत्थमेव स्वामी विवेकानन्दः प्रकाशानन्दं च रामकृष्णाश्रमस्थापनरामकृष्णोपदेशप्रचारकार्ये नियुज्य स्वकीयाप्तसचिवस्य, भाषणसंग्रहीतुः, श्रीमतो गुड्विन् महाशयस्य मरणवार्ताश्रवणजनितदुःखशमनार्थं तथैव प्रबुद्धभारतपत्रिकासम्पादकस्य राजमय्यरस्य च काश्मीरवासं स्वीकृत्य पुनः पाश्चात्यदेशयात्रां तस्मिन्नेव वत्सरे जुलै मासि स्वीचकार । वर्षमेकममेरिकाखण्डे कतिपयमासानिंग्लेण्ड्प्रमुखनगर्यां लण्डन् नाम्न्यामुषित्वा, प्यारिस् पत्तने प्रचलिते धार्मिकेतिहाससम्मेलनाधिवेशनं जगाम स स्वामी । तत्रापि बहूनि भाषणानि चक्रे मित्रचक्रं च सम्पाद्याविष्कृतदेशभक्तिः क्रि. श. १९०० तमे वर्षे दिसम्बर मासि नवमे दिने भारतवर्षं प्रत्यागतः ।

क्रमेण गुरुकार्यनिरतस्य तस्य देहारोग्यं बलं च क्षीणदशामवापतुस्तथापि मानसिकोत्साहस्तु द्विगुणतरमभिववृधे। आश्रमान्तःकलहं समीकृत्य विविधविधैश्छिद्रीभूतं तं पुनर्व्यवस्थापयामास ।

क्रि. श. १९०२ तमे वत्सरे जुलै मासि चतुर्थे दिने स्वामी विवेकानन्दश्चोत्थायोषःकाले निर्वर्तितप्रातर्विधिर्देवमन्दिराभ्यन्तरं गत्वा ज्ञातस्वमरण इव ध्यानासक्तो बभूव कञ्चित्कालम्। ध्यानानन्तरं जगन्मातुः कालिकादेव्याः स्तवं मधुरेणैव स्वरेण जगौ। श्रुत्वा गीतमाश्रमवासिनः सर्वे हृष्टाः पुलकिताश्चासन्। अनन्तरं देदीप्यमानवदनारविन्दो विवेकानन्दो बहिरागत्य चेतस्ततः प्रचलनं किञ्चिदस्पष्टालापं कुर्वन्नासीत्। "कालक्रमेण बहवो विवेकानन्दाः सञ्जायन्ते" इति प्रत्युद्गतां वाणीं तन्मुखारविन्दान्निशम्य तत्रत्याः शिष्याश्चकिता बभूवुः। भोजनानन्तरं रसभरितरीत्या व्याकरणमुपदिदेश शिष्येभ्यः। सायंकाले प्रेमानन्दस्वामिना सह बहिस्संचर्य प्रत्यागत्य वेदमहापाठशालामारब्धुं तमाज्ञापयामास। रात्रावन्तर्मुखो भूत्वा प्रशान्तरीत्या मातृपादारविन्दमविन्दत निमेषेणैव कालेन पश्यत्सु शिष्यवृन्देषु चकितेषु सत्सु वैद्यवृन्देषु। यथाविधि तस्य कलेबरस्य चरमसंस्कारान् सर्वे शिष्याः सभक्त्युन्मेषं चक्रुः।

अल्पायुरप्यनल्पतेजोनिधिः स्वामी विवेकानन्दश्चेत्थमस्तंगतोऽपि कीर्तिशेषो जीवन्निवाद्यापि भासते। भारतीयसंस्कृतिं पुनस्सञ्जीव्य प्रपञ्चराष्ट्रमण्डले भरतखण्डगौरवमुन्नतीकृत्य गुरुपरमहंसश्रीरामकृष्णसेवामन्यादृशरीत्या कृत्वा चाद्वैतधर्मामृतमुत्सृज्य देशविदेशेषु, आचन्द्रार्कं चिरस्थायिनीं कीर्तिं लब्ध्वा नामावशेषो विजयते ननु स्वामी श्री-

विवेकानन्दः । श्रूयते खल्वद्यापि तस्य वीरवाणी यथा प्रचोदिताश्चानेके देशभक्ता भारतोद्धारक्रियानिमग्ना भारतीयदिव्यसंस्कृतिज्योतिःप्रचारकार्य-निरता विद्यन्ते ।

## ॥ उपसंहारः ॥

कौशिकान्वयभुवा भुवि सन्तो
नागराजकविना रमणीयम् ।
गद्यमद्य रचितं परिपठ्य
मङ्गलानि सततं हि लभन्ताम् ॥

## ॥ समाप्तोऽयं प्रथमभागः ॥

ॐ



श्रीः

# भारताम्बिकास्तुतिः

---

अङ्गवङ्गसिन्धुराष्ट्रकूटकोटिसंयुतां
देवसिन्धुनर्मदादिसिन्धुसङ्गशोभिताम् ।
शैलराजविन्ध्यसह्यशैलपङ्क्तिरक्षितां
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ १ ॥

रामकृष्णरामदासबुद्धदेवमातरं
विक्रमार्कभोजराजराजराजपालिताम् ।
भासकालिदासभट्टिबाणभारविप्रसूं
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ २ ॥

पश्चिमाब्धिदक्षिणाब्धिपूर्वसिन्धुसंवृतां
काशिकागयाप्रयागपत्तनाभिशोभिताम् ।
पम्पयाभिरञ्जितां च चम्पया मनोहरां
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ ३ ॥

योगिवर्यशङ्करार्यधर्ममार्गदर्शिनीं
पूजनीयमालवीयगान्धिनेहरूसेविताम् ।
श्रीरवीन्द्रदिव्यकाव्यलब्धकीर्तिसंततिं
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ ४ ॥

सत्यसत्वशालिनीं सुधर्ममार्गदर्शिनीं
भुक्तिमुक्तिदायिनीं विरक्तिबुद्धिवर्धिनीम् ।
पापसङ्घनाशिनीं परात्परां पुरातनीं
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ ५ ॥

देवमन्दिराभिरञ्जितात्मतीर्थराजितां
निर्जितामरावतीपुरीविराजितश्रियम् ।
सस्यवृद्धिकारिणीं प्रमोददुग्धवाहिनीं
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ ६ ॥

कोटिविंशतिद्वयस्वलोकशोकमर्दिनीं
कोटिमर्त्यजातिधर्मकर्ममर्मनिर्मिताम् ।
कालचक्रवर्तिनीं पुराणसंस्कृतिप्रभां
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ ७ ॥

पारतन्त्र्यमोचनक्रियानिबद्धकङ्कणैः
स्वार्थहीनजीवितैः स्वजीविते गतस्पृहैः ।
राजनीतिपण्डितैस्तनूभवैस्सदा स्तुतां
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ ८ ॥

धैर्यशौर्यसाहसादिशीलपङ्क्तिभूषितै-
देशभक्तसैनिकैः स्वतन्त्रमन्त्रदीक्षितैः ।
राष्ट्रगीतगायने रतैस्सदा सुतैर्नुतां
पुण्यभूमिमादरान्नमामि भारताम्बिकाम् ॥ ९ ॥

सौख्यदानि मङ्गलानि सर्वजीवराशिषु
भारताम्बिका दयामयी सदा दिशत्वरम् ।
दास्यबन्धमोचिता सुभाग्यचक्रवर्तिनी
सत्वरं समेधतां प्रपञ्चराष्ट्रमण्डले ॥ १० ॥

भक्तिभावपूरितः पुनः पुनश्च मातरं
वेदवृन्दकीर्तितां समुज्ज्वलां सदा नतः ।
सन्ततं हि मङ्गलार्थमुन्नताभिलाषिणीं
स्तौमि मञ्जुलैर्वचोभिरीडितां सुरैरपि ॥ ११ ॥

ये पठन्ति भारताम्बिकास्तुतिं सदा नरा
भक्तिनम्रमौळयो मनोज्ञया गिरा नवाम् ।
नव्यकीर्तिशोभितास्सुदिव्यकान्तिराजिता-
स्त भवन्ति मातृभक्तिपूर्णमानसा ध्रुवम् ॥ १२ ॥



## ERRATA

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ८ | कच्चित्का | कश्चित्का |
| ५ | १२ | पूर्वजरै | पूर्वजैर |
| ७ | १० | वृद्ध्यार्थं | वृद्ध्यर्थं |
| ७ | २० | वर्धिनो | वर्धनो |
| ८ | १४ | निबडी | निबिडी |
| ९ | १४ | महामहेन्द्रः | महीमहेन्द्रः |
| १२ | २ | अहन्यहानि | अहन्यहनि |
| १२ | ५ | मदिरपान | मदिरापान |
| १२ | ७ | समुद्रीपरी | समुद्रोपरि |
| १२ | ७ | विदेशा | विदेश |
| १२ | ११ | सिप्रमेव | क्षिप्रमेव |
| १२ | १३ | भेदम | भेदन |
| १२ | १५ | स्वधर्मः | स्वधर्म |
| १४ | १ | तरन्य | तदन्य |
| १९ | १७ | भारताथि | भारतीय |
| २१ | १ | र्बाह्या | बाह्या |
| २४ | ५ | वृतवे | वृतेव |
| २५ | ३ | त्मयि | त्मीय |